ISVARA KRISHNA'S

# SANKHYA KARIKAS



WITH

## SANKHYA RAMANIYA

Commentary by

Brahma Sri.

*Kuruganti Venkataramana Sastri*

श्री ईश्वरकृष्णेन प्रणीताः

# सांख्यकारिकाः



ब्रह्मश्री वेदमूर्तिभिः विद्वत्प्रवरैः

कुरगण्टि वेंकटरमणशास्त्रिभिः विरचितया

## सांख्यरमणीयया

व्याख्यया समुल्लसिताः

तदन्तेवासिमण्डलेन प्रकटीकृताः

# निवेदनम्

विज्ञातं खलु सर्वशास्त्रविद्भिः भगवता ईश्वरकृष्णेन प्रणीतास्सांख्यकारिकाः मुमुक्षूणां तत्त्वावबोधनायेति। ताश्च व्याख्याताः पण्डितप्रकाण्डैः गौडपादवाचस्पत्यादिभिः। तासु व्याख्यासु तत्रभवतां वाचस्पतिमिश्रानां तत्त्वकौमुदी शास्त्रजटिला कैश्चिदेवावगन्तुं शक्यते। गौडपादानां च भाष्यग्रन्थः बालानां सुखबोधायेति बहुधा तत्त्वविमर्शनविरहिता। अत्र ग्रथिता च सांख्यरमणीया द्वयोः गुणसम्मेलनेन सर्वेषां जिज्ञासूनां परमसम्मिता भूयात्॥

एते व्याख्यातरश्च आन्ध्रदेशीयगुण्टूरुमण्डलस्य वेमूरुग्रामवासिनः विद्वत्प्रवराः कुरुगण्टि वेङ्कटरमणशास्त्रिणः। ते च आशैशवात् गीर्वाणविद्यासमुद्रप्लाविनः परमपूज्यानां चन्द्रनारायणभट्टाचार्याणां सविधे तर्कसांख्यादिपूर्वग्रन्थानभ्यस्य ब्रह्मीभूतकुरुगण्टि सुब्रह्मण्याग्निचिद्याजिप्रसादितां वेदान्तविद्यां, मन्त्रमूर्तिभिः जन्ध्याल दक्षिणामूर्ति शास्त्रिभिः प्रकाशितेन श्रीविद्यावर्त्मना परमसुखसाक्षात्कारसिद्ध्यर्थं चर्वणमकुर्वन्। अन्ते च सन्यस्य परशिवनामाजुवन्॥

तेषां च पादपंकजाभ्यां अनेकशिष्यभ्रमराः बहूनि शास्त्रमधूनि पीतवन्तः। एतच्च ग्रन्थप्रकाशमेतेषां कश्चित् स्वगुरुस्मरणविशेषः॥

एतद्ग्रन्थस्य मुद्रणव्ययः ब्रह्मश्री वेदमूर्तिभिः शिष्ला जानकिरामशास्त्रिभिः, वंकमामिडि वेङ्कटेश्वरशास्त्रिभिश्च संभृतः। तयोः श्रीगुरुप्रसादो नितरां भूयादिति आशास्महे॥

इति निवेदितारः

**प्रकाशकाः**



श्रीशिवाय गुरवे नमः

ईश्वरकृष्णविरचिताः

# सांख्यकारिकाः

श्री कुरुगण्टि वेंकटरमणशास्त्रि
विरचितया सांख्यरमणीयया संवलिताः

कपिलं दक्षिणामूर्तिं सुब्रह्मण्यगुरू नमन् ।
श्रीसांख्यकारिकाव्याख्यां रमणीयां तनोम्यहम् ॥

श्रीमानादिसिद्धः कपिलो महाज्ञानी कल्पादौ स्वयमेवाविर्भूत सकलतत्वविज्ञान आध्यात्मिकादिदुःखाभिभूतान् लोकानुद्दिधीर्षुः "नहि सांख्यसमं शास्त्रम्" इति सुप्रसिद्ध सांख्यशास्त्रं प्रवर्तयामास । तच्च शास्त्रमल्पबुद्धीनां दुरधिगमं मन्वानः ईश्वरकृष्णनामा महायोगी सकलं शास्त्रप्रमेयं आर्यासप्तत्या संक्षेपतो जग्रंथ । सा च महानुभावैर्वाचस्पत्यादिभिर्व्याख्यातैव । तथाऽपि तामेवाहं व्याख्याय स्वविज्ञानकण्टकोद्धरणाय विदुषां पुरतः प्रख्यापयामि ।

अथ तत्रभवानीश्वरकृष्णनामा महायोगी आर्यासप्तत्याख्यं सांख्यशास्त्रप्रबंधं चिकीर्षुः सकलमेव शास्त्रं मंगलं मन्वानः विषयप्रयोजनसम्बन्धाधिकारिनिरूपणपूर्वकं शास्त्रमवतारयति :—

दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ ।
दृष्टे साऽपार्था चेन्नैकांतात्यंततोऽभावात् ॥

दुःखानां त्रयं दुःखत्रयं आध्यात्मिकं आधिभौतिकं आधिदैविकं चेति। तत्र आध्यात्मिकं द्विविधं शारीरं मानसं चेति। तत्र शारीरं वातपित्तादिधातुवैषम्यनिमित्तम्। मानसं च कामक्रोधादिनिमित्तम्। आधिभौतिकं मानुषपशुपक्ष्यादिनिमित्तम्। आधिदैविकंच यक्षराक्षसादिनिमित्तम्। तच्च दुःखत्रयं रजःपरिणामभेदः। तेन दुःखत्रयेणांतःकरणवर्तिना अभिघातश्चेतनाशक्तेरभिसम्बन्धः। तेन संबंधेन विषण्णेन पुरुषेण तदपघातके तस्य दुःखत्रयस्य अपघातके आत्यंतिकध्वंसजनके हेतौ प्रकृतिपुरुषान्यथाख्यातिरूपे कारणे। जिज्ञासा ज्ञातुमिच्छा जिज्ञासा कर्तव्येति शेषः। इच्छा शब्देन इच्छासाध्यो विचारो लक्ष्यते। तथा च आत्यंतिकदुःखध्वंस-फलकः प्रकृतिपुरुषान्यथाख्यातिविज्ञानसाधन (नाय) भूतः। विचारः कर्तव्य इति फलितोऽर्थः। तथा च श्रुतिः- "आत्मावा अरे द्रष्टव्य श्श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति। आत्मा चेतनः पुरुषः द्रष्टव्यः प्रकृतितो विविच्य साक्षात्कर्तव्यः। तत्साधनमाह श्रोतव्यः। शास्त्रश्रवणपूर्वकं विचारः कर्तव्यः। मंतव्यः श्रोतोऽर्थः अनुकूलतर्क जालेन दृढीकर्तव्यः। निदिध्यासितव्यः साक्षात्कारानुकूलेन ध्यानेन संस्कर्तव्यः इति। एवंच शास्त्रारम्भश्च समर्थितो भवति। दुःखस्य बुद्धिगतत्वात् पुरुषस्य उदासीनत्वाच्च रजःपरिणामरूपदुःखाप-घाताय शास्त्रं नारम्भणीयमिति प्राप्तेऽतःकरणवर्तिना दुःखेन चेतनाशक्तेरभिभवसम्भवात् तादृशाभिभवविघाताय शास्त्रमारम्भणीय-मिति सिद्धम्। ननु तादृशदुःखत्रयाभिघाताय सुकरस्योपायांतरस्य

सद्भावात् कृतमतिदुष्करतत्वज्ञानेन। तथाहि शारीरकदुःखोपघाताय वैद्यशास्त्रप्रसिद्धौषधादयः मानसिकदुःखोपघाताय स्रक्चंदनवनितादयः आधिभौतिकदुःखोपघाताय नीतिशास्त्रप्रसिद्धाः निरत्ययस्थानादयः आधिदैविकदुःखोपघाताय मणिमंत्रादयश्च बहवः सन्त्युपायाः। एवं दृष्टोपायैः दुःखत्रयोपघातस्य सुसाध्यत्वादिति शंकते दृष्टे सापार्थाचेदिति। दृष्टे सुकरे उपाये विद्यमाने सा जिज्ञासा अपार्था व्यर्था अनेकजन्मपरंपरायाससाध्यत्वात्। निराकरोति इतिचेन्नेति। तत्र हेतुः एकांतात्यंततोभावादिति। एकांतः अवश्यं दुःख निवृत्तिर्भविष्यतीति नियमः। अत्यंतः निवृत्तस्य दुःखस्य पुनरनुदयः तयोरभावात् एकांतात्यंततोऽभावात्। सार्वविभक्तिकस्तसिः षष्ठी स्थाने प्रयुक्तः। अयं भावः :- औषधादिभिः कचित्तात्कालिकदुःखोपशान्तावपि सर्वत्रादर्शनात् तत्रापि पुनरुत्पत्तिदर्शनाच्च आत्यंतिकदुःखोपशान्तिस्तत्वज्ञानेनैवेति जिज्ञासा युक्तैवेत्यतोऽपि शास्त्रमारम्भणीयमेवेति सिद्धम्। एवञ्च प्रकृतिपुरुषान्यथाख्यातिः शास्त्रस्य विषयः। आत्यंतिकदुःखोपघातः प्रयोजनम्। दुःखत्रयाभिभूतो दृष्टोपायेष्वेकांतात्यंताभावदर्शी अधिकारी। तेषां यथायोगं सम्बन्धश्च। एवं विषयप्रयोजनादिसम्भवाच्च शास्त्रमवश्यमारम्भणीयमेवेति।

एवं दृष्टोपायाभावेऽप्यतिदुष्करतत्वज्ञानापेक्षया वैदिकस्य ज्योतिष्टोमादिकर्मकलापस्य सुकरस्य एकांतात्यन्तदुःखोपहतिहेतोस्सत्वात् पुनर्जिज्ञासा व्यर्थैव। कर्मफलं च स्वर्गः। सच दुःखासंभिन्न सुखमेव। "यन्न दुःखेन संभिन्न" इत्यादिना स्वर्गपदार्थ-

निर्वचनात्। तत्सुखं नित्यं च "अपाम सोमममृता अभूम" इति श्रुतेः इत्याशंक्य समाधत्ते :—

दृष्टवदानुश्रविकःस ह्यविशुद्धिक्षयातिशययुक्तः।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्॥ २

दृष्टवदित्यादि। अनुश्रवो वेदः तत्र जातः आनुश्राविकः कर्मकलापः ज्योतिष्टोमादिरूपः। सच दृष्टवत् दृष्टतुल्यः। यथा दृष्ट उपायः एकांतात्यंताभाववान् तथा आनुश्रविकः कर्मकलापोऽपीति भावः। विवेकज्ञानस्याप्यानुश्रविकत्वेऽप्यत्र कर्मकलापएव ग्राह्यः। तत्त्वज्ञानस्याऽपि "आत्मावा अरे द्रष्टव्यः" "न स पुनरावर्तते" इत्यादिश्रुतिभिरानुश्रविकत्वस्य सद्भावात्। आनुश्रविकस्य कर्मकलापस्याऽपि दृष्टतुल्यत्वे हेतुमाह सहीत्यादिना। हि यस्मात् सः आनुश्रविकः कर्मकलापः अविशुद्धिक्षयातिशयैर्युक्तस्तस्मात् अविशुद्धिः सोमादियागस्य पशुबीजादिसाधनत्वं। ज्योतिष्टोमादिजन्यधर्मरूपस्यापूर्वस्य पशुहिंसादिजन्येन अनर्थहेतुना अपूर्वेण अधर्मरूपेण सांकर्यात्। क्षयः अनित्यस्य कर्मणः फलस्य स्वर्गादेरपि अनित्यत्वम्। अपाम सोमममृता अभूमेति श्रुतिचोदितममृतत्वमापेक्षिकमेव नात्यंतिकम्। अतिशयः कर्मणां बहुत्वात् फलतारतम्याच्च। अपकृष्टकर्मफलं स्वर्गमात्रमनुभवतः उत्कृष्टकर्मफलं स्वाराज्यादिकमनुभवन्तं दृष्ट्वा दुःखमुपजायत इति अपकृष्टकर्मफलापेक्षया उत्कृष्टकर्मफलस्य अतिशयत्वं। भावप्रधानो

निर्देशः। तैरविशुद्धिक्षयातिशयैर्युक्तः आनुश्रविकइत्यर्थः। तथा च प्रयोगाः :- कर्मफलं अविशुद्धम्। हिंसादिना सांकर्यात्। विषसंपृक्तान्नवत्। कर्मफलं क्षयि। कार्यत्वात्। कृषिकार्यधान्यादिवत्। कर्मफलं सातिशयं। उत्कृष्टापकृष्टकर्महेतुत्वात्। उत्कृष्टापकृष्टकृष्यादिहेतुकधान्यादिवत्। एवं दृष्टं आनुश्रविकं च दुःखापघातुकमुपायं युक्तिभिश्शास्त्रेण च निरस्य मुख्यमुपायमाह तद्विपरीत इत्यादिना। ताभ्यां दृष्टानुश्रविकाभ्यां दुःखापघातुकाभ्यामुपायाभ्यां विपरीतः सत्वपुरुषान्यताप्रत्ययसाक्षात्काररूपो हेतुरुपायः श्रेयान् प्रशस्यतरः। दृष्टादानुश्रविकः प्रशस्यः। तस्मादप्ययमन्यथाप्रत्ययसाक्षात्काररूपः-शप्रस्यतर इति भावः। आनुश्रविक उपायः अविशुद्धानित्यसातिशयफलः। प्रकृतिपुरुषान्यथाख्यातिरूपस्तूपायो विशुद्धनित्यनिरतिशयफलः। तादृशसाक्षात्कारस्य केवलविचारजन्यत्वाद्विशुद्धत्वम्। न स पुनरावर्तत इति श्रुतेर्नित्यताम्। ननु जन्यत्वादनित्यमेव ज्ञानफलमितिचेन्न। भावरूपस्य कार्यस्यैव जन्यत्वेनानित्यत्वम्। आत्यंतिकदुःखध्वंसरूपफलस्य तद्विपरीत्यान्नित्यत्वमेव। ज्ञानफलस्य एकरूपत्वात् निरतिशयत्वं चेति युक्तमस्योपायस्य सर्वोत्कृष्टत्वम्। कुतस्तस्य साक्षात्कारस्योत्पत्तिरित्यत आह व्यक्तेत्यादि। व्यक्तं कार्यजातं अव्यक्तं कारणं प्रधानम् ज्ञ पुरुषः तेषां विज्ञानात् तादृशसाक्षात्कारो जायत इत्यर्थः। कारणाव्यक्तज्ञानाय व्यक्तकार्यज्ञानमुपयुज्यते। व्यक्ताव्यक्तयोर्ज्ञानं पुरुषस्य ताभ्यां वैलक्षण्यज्ञाने उपयुज्यते। अयमभिप्रायः- श्रुतिस्मृतिपुराणादिभ्यः व्यक्तादीन् विवेकेन श्रुत्वा युक्तिभि-

मननं कृत्वा दीर्घकालादरनैरंतर्यसत्कारसेविताद्भावनामयात् ध्यानात् प्रकृतिपुरुषान्यथाख्याति ( प्रकृतिविविक्तपुरुष ) साक्षात्कारो जायत इति "आत्मावारे ....निदिध्यासितव्य" इति श्रुतेरर्थो द्वाभ्यां श्लोकाभ्यां सूचित इति सिद्धम्। २

एवं शास्त्रस्यारंभणीयत्वमुक्त्वा शास्त्रमारभमाणः " संक्षेपविस्तराभ्यामुक्तोह्यर्थस्सम्यग्बुद्धिमारोहतीति न्यायेन संक्षेपतश्शास्त्रप्रमेयमुपपादमति :—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ३

मूलप्रकृतिरित्यादिः— सांख्यशास्त्रे तत्वानि चतुर्विंशतिः। तानि च — मूलप्रकृतिः ततो महत्तत्वम्। ततोऽहंकारतत्वम्। तत्र सात्विकाहंकारात् मनसा सहेंद्रियाणि एकादश। तामसाहंकारात् पञ्च तन्मात्राणि। पञ्चतन्मात्रेभ्यः पञ्च महाभूतानीति। तत्र मूलप्रकृतिः प्रधानम् सर्वेषां तत्वानां मूलत्वात्। तस्या अपि मूलसत्वे प्रमाणाभावात् अनवस्थाप्रसंगाच्च। सा मूलप्रकृतिः अविकृतिः सर्वथा प्रकृतिरेव कदापि विकृतिर्न भवति। सा सत्वरजस्तमसां साम्यावस्था कुतो विकृतिर्न भवतीतिचेत् मूलत्वादेव। महदादितन्मात्रपर्यन्ताः सप्त प्रकृतिविकृतयः प्रकृतयः विकृतयश्च। महत्तत्वं अहंकारतत्वस्य प्रकृतिः प्रधानस्य विकृतिः। अहंकारतत्वं इन्द्रियाणां तन्मात्राणां च प्रकृतिः महत्तत्वस्य विकृतिः। पञ्च तन्मात्राणि तु

पञ्च महाभूतानां प्रकृतयः तामसाहंकारस्य विकृतयश्च। अतो महदादितन्मात्रांतास्सप्त प्रकृतिविकृतयः। षोडशकश्च विकारः। एकादशेंद्रियाणां पञ्चभूतानाञ्चेति षोडश तत्वानां गणः षोडशकः विकारएव। न प्रकृतिः। घटादीनां पृथिव्यादिमहाभूतजन्यत्वेऽपि पृथिव्यादिभ्यो न पृथक् तत्वांतरत्वं पृथिव्यादीनां घटादीनाञ्च स्थूलत्वस्य इंद्रियग्राह्यत्वस्य च समानत्वात् पृथिव्यादिष्वेवांतर्भावः। प्रकृतिविकृतिविलक्षणं तत्वमाह न प्रकृतिर्न विकृतिः पुरुष इति। प्रकृति-विकृतिविलक्षणचिन्मात्रः उदासीनः पुरुष इत्यर्थः। यदर्थं प्रकृतिः प्रवर्तते सोऽन्य एवेति भावः। ३

एवं शास्त्रप्रमेयांतर्गतं पञ्चविंशतितत्वस्वरूपं सामान्येनोक्त्वा प्रमेयस्य प्रमाणाधीनतया प्रमेयसिद्ध्यौपयिकं प्रमाणं निरूपयति:—

**दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्।**
**त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि॥ ४**

दृष्टमित्यादि— अत्र प्रमाणमिति लक्ष्यनिर्देशः। तन्निर्वचन-लक्षणं। तच्च प्रमाकरणत्वं। तत्र प्रमा नाम अनधिगतासंदिग्धा-विपरीतविषया बुद्धिवृत्तिः प्रमा। तत्करणत्वं प्रमाणसामान्यलक्षणं। स्मृतिसंशयविपर्ययेष्वतिव्याप्तिवारणाय विशेषणत्रयं। तद्विभागमाह त्रिविधमिति। कास्ता विधा इत्यत्राह दृष्टमित्यादि। दृष्टं प्रत्यक्षं अनुमानं आप्तवचनं शब्दः इति त्रिविधं प्रमाणम्। लोकैस्तुत्या-

दनार्थत्वाच्छास्त्रस्य । लौकिकप्रमाणाभिप्रायमेतत् । अतो योगिनां विज्ञानमत्र नाभिहितम् । ननु शास्त्रांतराणि उपमानादीन्यपि प्रमाणान्यङ्गीकुर्वंति । तानि किमत्र नोक्तानीत्यत आह सर्वप्रमाण सिद्धत्वादिति । सर्वाणि प्रमाणानि उपमानादीन्यपि सिद्धानि अन्तर्भूतान्यत्रेति व्युत्पत्त्या सर्वेषां प्रमाणानामत्रैवांतर्भाव इति भावः । अयमन्तर्भावः पश्चादुपपादयिष्यते ।

ननु प्रमेयप्रतिपादनाय प्रवृत्तं शास्त्रं कस्मात्प्रमाणं वक्तीत्यत आह प्रमेयसिद्धिः प्रमाणाद्धि । प्रमाणप्रमितस्यैव प्रमेयत्वात् प्रमेयसिद्धये प्रथमं प्रमाणमेव निरूपणीयमिति भावः । ४

एवं प्रमाणस्वरूपं विभागं च सामान्येनोक्त्वा विशेषतस्तेषां लक्षणानि प्रतिपादयिष्यन् प्रथमं प्रत्यक्षस्य सर्वप्रमाणमूलत्वात्तल्लक्षण प्रतिपादनपूर्वकं प्रमाणानि लक्षयति:-

**प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातं ।**
**तल्लिङ्गलिङ्गिपूर्वकमाप्तश्रुतिराप्तवचनं तु ॥** ५

प्रतिविषयेत्यादि :- विषयाः पृथिव्यादयो बाह्या आंतरः सुखादयश्च । तन्मात्रादयो योगिप्रत्यक्षविषया नात्र लौकिकप्रत्यक्षप्रस्तावे संगृहीताः । विषयं विषयं प्रतिवर्ततइति प्रतिविषयं अर्थसन्निकृष्टमिंद्रियमित्यर्थः । तस्मिन्नध्यवसायः बुद्धिवृत्तिरूपं ज्ञानं । तत्प्रमाणम् । अनेन यश्चेतनाशक्तेरनुग्रहः प्रमा। बुद्धेरचेतनत्वात् तद्वृत्तिरूपं ज्ञानमप्यचेतनम् । सुखादयोऽपि बुद्धिपरिणामरूपाः

अचेतनाएव। पुरुषस्तु सुखाद्यननुषङ्गी चेतनः। सोऽयं बुद्धिप्रतिबिम्बितः बुद्धिवृत्तिरूपेण ज्ञानसुखादिना तच्छायापत्त्या घटादिज्ञानवानिव सुखादिमानिव च भवतीति (सोयं सम्बन्धः अनुग्रह इत्युच्यते) अचेतनाऽपि बुद्धिः तदध्यवसायश्च पुरुषप्रतिबिम्बरूपच्छायापत्त्या चेतनेव भवतीति सोऽयं परस्परसम्बन्धश्च अनुग्रह इत्युच्यते। अयं पुरुषप्रतिबिम्बएव चेतनाशक्तिरित्युच्यते। तदेव वक्ष्यति तस्मात्तत्संयोगादित्यादिना। अत्र प्रतिशब्देन इन्द्रियार्थसन्निकर्षग्रहणात् स्मृत्यादयो निरस्ताः। विषयशब्दग्रहणेन असद्विषयो विपर्ययः परास्तः। अध्यवसायशब्दग्रहणेन संशयो निराकृतः। एवञ्च अर्थसन्निकृष्टेन्द्रियसम्बन्ध्यध्यवसायात्मकबुद्धिव्यापारः प्रत्यक्षम् इति प्रत्यक्षस्य संपूर्णं लक्षणम्। एवमेवेन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षमिति ज्ञानं बुद्धिरिति च प्रकारान्तरेण तार्किकादिभिरप्युक्तम्। इयान् भेदः—इन्द्रियं प्रमाणं बुद्धिरूपं ज्ञानं फलमिति तेषामाशयः। अत्र तु बुद्धिः प्रमाणं तेन चेतनाशक्तेरनुग्रहः फलमिति। प्रत्यक्षकार्यत्वात् अनुमानं प्रत्यक्षानन्तरं निरूपयति त्रिविधमित्यादिना। सामान्यलक्षणमाह तल्लिंगलिंगिपूर्वकमिति। तत्र अनुमानम् लिंगं व्याप्तो धूमादिः लिंगि व्यापको वह्न्यादिः लक्षणया तयोर्ज्ञानमित्यर्थः। पक्षधर्मता च धूमादेः पर्वतादिवृत्तित्वम्। तथा च व्याप्यव्यापकपक्षधर्मताज्ञानपूर्वकत्वं अनुमानसामान्यलक्षणं बोध्यम्। नन्वनुमानमिति प्रमाणमेव नास्ति लोकायतिकादिभिः प्रत्यक्षस्यैकस्यैव प्रमाणत्वेनाङ्गीकारादिति चेन्न। परपुरुषवर्तिनः अज्ञानसंशयविपर्ययाः

कामक्रोधादयोवा अनुमानप्रमाणाभावे कथं ज्ञेयाः? तत्र चक्षु-
रादीन्द्रियं न प्रवर्तते। सन्निकर्षाभावात्। अतो वचनभेदमुखादि-
विकारभेदेन ज्ञातव्याः। एतदेवानुमानं यद्वचनभेदादिना लिंगेन
संशयादिपरिज्ञानम्। अतः अकामेनाऽपि लोकायतिकेन अनुमान-
प्रमाणमभ्युपगन्तव्यमेव। तस्मादनुमानं न वेदशास्त्रबुद्धिस्वीकृतम्।
अनुमानं त्रिसंख्येति त्रिविधमनुमानमाख्यातमिति अनुमानं त्रिविधम्
पूर्ववत्, शेषवत्, सामान्यतो दृष्टं चेति। तत्र पूर्ववत् धूमादिना
पर्वते वह्न्यनुमानम्। पूर्वं महानसादौ गृहीतव्याप्तेर्वह्नेः
पर्वतादौ पक्षे व्याप्यधूमादिना लिंगेन अभ्यूहनम्। सर्वानुमानेषु
लिंगप्रत्यक्षस्यावश्यकत्वात् प्रत्यक्षसापेक्षत्वम्। शेषवत् व्यतिरेकीत्युच्यते।
पृथिवी स्वेतरभिन्ना गंधवत्त्वादित्यत्र पृथिव्याः पक्षत्वात् प्रसक्तस्य
अन्यस्य दृष्टांतस्य प्रतिषेधेन अन्यत्र धूमवत्त्वासम्भवात् शिष्यमाणे
पक्षएव धूमादिना इतरभेदाद्यभ्यूहनं शेषवदिति भावः। सामान्यतो
दृष्टम् इंद्रियादिविषयकानुमानम्। यथा ज्ञानस्याविक्रियात्वात्
रूपादिज्ञानं करणवत् क्रियात्वादिति। अत्र छिदादिज्ञानं दृष्टांतः।
पूर्वानुमानाभ्यामत्रायं विशेषः---छिदादिज्ञाने साध्यस्य वास्यादि-
मत्त्वस्य रूपादिज्ञाने साध्यस्य इन्द्रियवत्त्वस्य च नैकरूपत्वम्। भिन्न-
जातीयत्वात् इन्द्रियवास्योः करणयोः यथा महानसीयपर्वतीयवन्ह्योरेकं
जातिसामान्यम् तथा इन्द्रियवास्योरेकजातिसामान्याभावात्
इदमिन्द्रियाद्यनुमानं सामान्यतोऽदृष्टमित्युच्यते अत्रान्यथाऽपि विभागः-
अनुमानं द्विविधम् वीतमवीतं चेति। अन्वयमुखेन प्रवर्तमान

वीतं। व्यतिरेकमुखेन प्रवर्तमानमवीतम्। तत्र अवीतमेव शेषवदित्युच्यते। वीतं तु द्विविधम्। दृष्टस्वलक्षणसामान्यविषयम् अदृष्टस्वलक्षण-सामान्यविषयं चेति। तत्र दृष्टस्वलक्षणसामान्यविषयं पूर्ववदित्युच्यते। अदृष्टस्वलक्षणसामान्यविषयं सामान्यतोऽदृष्टमित्युच्यते। एवं द्विधापि विभाग एकरूप एव। आप्तवचनरूपं शब्दं लक्षयति। गामानयेति उत्तमवृद्धवाक्यश्रवणानन्तरं मध्यमवृद्धस्य गवानयनप्रवृत्तिमुपलभ्य गामानयेति वाक्यस्य गवानयनं वाक्यार्थइति बालेनानुमीयत इति अनुमानप्रमाणपूर्वकत्वात् अनुमानानंतर्यं शब्दप्रमाणस्य। आप्तश्रुतिराप्तवचनमिति न। आप्ताचासौ श्रुतिश्च आप्तश्रुतिः। श्रुति-वचनजनितं वाक्यार्थज्ञानं प्रमाणम्। तत्कारणं श्रुतिवाक्यम्। श्रुतिर्नाम वेदः। आप्तवचनमिति आप्तवाक्यमित्यर्थः। तच्च स्वतः प्रमाणम्। एवं वेदमूलकस्मृतीतिहासपुराणादिवाक्यमपि प्रमाणम्। तथा आदिविदुषः कपिलस्य कल्पादौ कल्पांतराधीतश्रुत्यादिस्मरण-संभवं वाक्यमपि प्रमाणम् अपौरुषेयत्वात्। वेदवाक्यं वेदस्यैव आप्तत्वम् प्रमाणत्वं च। इतरेषां तु आप्तवक्तृकत्वेन प्रमाणत्वम्। आप्तस्तु यथार्थवक्तेति तार्किका ऊचुः। आप्तग्रहणेन श्रुतिविरुद्धाः शाक्यादीनामागमा निरस्ताः। तेषां वेदमूलत्वाभावात्। अतस्ते अयुक्ताः। युक्तं चैतत्सांख्यम्। आप्तवचनंतिवति। तु शब्दः दृष्टानु-मानाभ्यां भेदकः। एवं स्वाभिमतेष्वेव प्रमाणेषु शास्त्रांतराङ्गीकृतानि उपमानादिप्रमाणानि अंतर्भवंते। तथाहि—उपमानं तावत् कश्चित् गवयशब्दार्थमजानन् कुतश्चिदारण्यकपुरुषात् गोसदृशो गवय इति

शृण्वन् गवयशब्दः गोसदृशस्य वाचक इति ज्ञात्वा अरण्यं गत वाक्यार्थं स्मरन् तत्र गोसदृशव्यक्तिं पश्यति। पश्चात् अयं गवय पदवाच्य इति ज्ञानमुपपद्यते। तत्र गोसदृशो गवय इति वाक्य मुपमानम्। तत् शब्दप्रमाणेऽन्तर्भवति। तज्जन्यं गवयशब्द गोसदृशस्य वाचक इति ज्ञानमनुमितिः। यथा—गवयशब्द गोसदृशस्य वाचकः। वृद्धैः प्रयुज्यमानत्वात्। गोत्ववाचकगोशब्द वदिति। चक्षुःसन्निकृष्टे गवये अयं गवयपदवाच्य इ ज्ञानमुपमितेः फलम्। तच्च प्रत्यक्षमेव। इति उपमान न प्रमेयान्तरमस्तीति न प्रमाणांतरमुपमानम्। एवमर्थापत्तिरपि प्रमाणांतरं। यथा पीनो देवदत्तो दिवा न भुंक्ते इत्यत्र पीनत्वा न्यथानुपपत्त्या रात्रिभोजनमर्थापत्त्या कल्प्यते इति तदप्यनुमानमेव यथा देवदत्तः रात्रौ भुंक्ते दिवा अभुंजानत्वे सति पीनत्वा यज्ञदत्तवदिति। अतः अनुमानात् न प्रमाणांतरमर्थापत्तिः। एवमभावोऽ न प्रमाणांतरम्। अभावस्य अधिकरणस्वरूपत्वं नास्तिकैरप्यंगीकृ मिति। भूतलातिरिक्तस्य अभावस्य अविद्यमानत्वात्। अभावोऽ प्रत्यक्षमेव। भूतले घटो नास्ति। यद्यस्ति उपलभ्येत्। उपलब्धेरभावा भूतलं घटाभाववदिति। अभावो नाम अनुपलब्धिः। ए सम्भवोऽपि न प्रमाणम्। स चानुमानमेव। यथा शते पञ्चाशदिति शतं पञ्चाशदविनाभूतम्। शतत्वात्। द्रोणाविनाभूतखारीवदिति ऐतिह्यमपि न प्रमाणम्। तस्यानिर्दिष्टप्रवक्तृकप्रवादपारंपर्यमात्रत्वात् यथा इह वटे यक्षस्तिष्ठतीति। तच्च न प्रमाणम् सांशयिकत्वात्

आप्तवक्तृकत्वनिश्चये तु शब्दप्रमाण एवांतर्भवतीति न प्रमाणांतरमैतिह्यम्। अतस्त्रिविधं प्रमाणमिति सुष्ठूक्तम्। ५

एवं व्यक्ताव्यक्तज्ञरूपप्रमेयसिध्यर्थं प्रमाणान्युक्तानि। तत्र व्यक्तं पृथिव्यादि। वह्न्यादि च प्रत्यक्षेण पूर्ववता अनुमानेन च सर्वैरपि विज्ञायते। अतस्तन्निरूपणाय न शास्त्रस्यावश्यकत्वं। किंतु यद्दुरधिगमं तदेव शास्त्रप्रतिपादनीयम्। अतो येन प्रमाणेन यत्प्रमेयं साध्यं तन्निष्कृष्य दर्शयति :—

सामान्यतस्त्वदृष्टादतीन्द्रियाणां प्रतीतिरनुमानात्।
तस्मादपि चासिद्धं परोक्षमाप्तागमात्सिद्धम्॥ ६

सामान्यतइत्यादि-तुशब्दः प्रत्यक्ष-पूर्ववदनुमानाभ्यां विशेषाभिधायकः। अतीन्द्रियाणां प्रधानपुरुषादीनां प्रतीतिः। सामान्यतोऽदृष्टादध्यवसायरूपादनुमानाद्भवति। बुद्धेश्चितिच्छायापत्तिरध्यवसाय इति पूर्वमेवोक्तम्। शेषवतोऽनुमानादित्यपि द्रष्टव्यम्। तच्चानुमानं महदादिक्रमे स्वर्गे अपूर्वदेवतादौ च न साधकं। अतः तस्मादपि च सामान्यतोऽदृष्टादनुमानात् चकारात् शेषवतश्चासिद्धम्। परोक्षं स्वर्गादिकं आप्तागमात्सिद्धम्। वेदप्रमाणैकगम्यमित्यर्थः। ६

यथा गगनारविंदादिकं प्रत्यक्षेणानुपलभ्यमानत्वादसत् तथा प्रधानादिकमपि असदेव स्यात्। कथमनुमानात्सिद्धिरित्याशंक्य नासत्त्वात्प्रधानादेरनुपलब्धिः। किंतु हेत्वंतरैरिति सामान्यतोऽनुपलब्धिहेतूनाह:—

**अतिदूरात्सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात्।**
**सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च॥ ७**

अतिदूरादित्यादि :— अत्रानुपलब्धिरिति पदं उत्तरश्लोकादनुषंजनीयम्। अतिदूराद्वियति समुत्पतन् पक्षी नोपलभ्यते नासत्त्वात्। अत इति सर्वत्र (अ) त्रानुषंजनीयम्। अतिसामीप्यात् लोचनस्थमञ्जनं न दृश्यते। इन्द्रियघातात् अन्धत्वादिरूपात् तद्विषयं रूपादिकं न गृह्यते। मनोऽनवस्थानात् [illegible]पहतमनसः स्वाभिलषितमेव स्पर्शादिकं [illegible] इन्द्रिय[illegible]थो न गृह्यते। सौक्ष्म्यादिन्द्रियसन्निकृष्ट[illegible]कं न गृह्यते। व्यवधानात् कुड्यादिव्यवहित[illegible] न गृह्यते। [illegible] सूर्यकिरणाभिभूतं ग्रहनक्षत्र[illegible] न गृह्यते। [illegible]थैसमूहसहपठितवेदस्य [illegible] न गृह्यते। चकारादनुद्भवादयस्संगृहीताः। तस्मा[illegible]। तथा इति अव्ययार्थे [illegible] प्रसज्येत। किंतु उपलब्धियोग्यताऽभावे अभावप्रसक्तिः। उक्तेषु उक्तहेतुभिः उपलब्ध्यभावेऽपि उपलब्धियोग्यतायास्सत्त्वात् नासत्त्वम्। प्रधानादिष्वपि लौकिकप्रत्यक्षयोग्यताऽभावेऽपि योगिप्रत्यक्षयोग्यतायास्सत्त्वात् नासत्त्वम्। शास्त्रस्य लौकिकव्युत्पादनार्थत्वात्। ७

उक्तकारणेषु प्रधानादीनामनुपलब्धौ किं कारणमित्यत्राह :—

**सौक्ष्म्यात्तदनुपलब्धिर्नाऽभावात्कार्यतस्तदुपलब्धेः।**
**महदादि तच्च कार्यं प्रकृतिसरूपं विरूपं च॥ ८**

सौक्ष्म्यादिति :— अतिसौक्ष्म्यात् तस्य प्रधानस्यानुपलब्धिः। न अभावात् [illegible]वत्। कुतः कार्यतः तज्जन्यात् कार्यात् तस्य प्रधानस्योपलब्धेः। लौकिकप्रत्यक्षायोग्यत्वा[illegible] अनुमानेन कार्यलिंगकेन तस्य प्रधानस्यो[illegible]भवतीत्यर्थः। तत्कार्यं किमित्यत आह तच्च कार्यं महदादि। [illegible] महदादेः [illegible] यथाऽनुमानं तदग्रे वक्ष्यते। प्रधानस्य [illegible] तत्र त्रिकार्यं प्रकृतिसरूपं [illegible] विरूपं च। [illegible] सरूपं विरूपं च तदेव कार्यम्। [illegible] विरूपं मृत्कार्यं घटादि। केवल[illegible] तदपि कारणमेव भवेत्; न कार्यमिति भावः। ८

प्रधानसिद्ध्यर्थं प्रथमं तत्कार्यस्य महदादेस्सत्त्वं साधयति :—

**असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात्।**
**शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्॥ ९**

असदकरणादित्यादि :— अत्र बौद्धाः सतो विनाशादसत् निरुपाख्यं जायत इति वदन्ति। तदसत्। असज्जायत इति विरुद्धम्। यज्जायते तदेव सत्। [illegible]तोऽसत्त्वात्पत्त्यासम्भवाच्च। सतः कारणात् विवर्तभूतं कार्यजातं मिथ्यात्मकं कार्यजातं जायत इति वेदांतिनः। तदप्यनुपपन्नम्। अद्वयस्य सतः सुखदुःखमोहवच्छब्दाद्यात्मकत्वं भेदरूपत्वं च न भाति। अपि च प्रपंचप्रत्ययस्य असति बाधके मिथ्येति वक्तुं न शक्यते। पूर्वं असत्कार्यं सत्

एव कारणात् सदात्मकं जायत इति तार्किकाः। पूर्वं सदेव कार्यं कारणात्मना पश्चाज्जायतइति सांख्याः। एवं तार्किकसांख्ययोर्विप्रतिपत्तौ तार्किकमतनिरासपूर्वकं स्वसम्मतं कार्यस्य कारणात्मना सत्त्वं साधयति सत्कार्यमिति। कार्यं महदादि सत् कारणव्यापारात्पूर्वमपि सदेव। तत्र हेतूनाह असदकरणात्। अत्यंतासतः वंध्यापुत्रादेः कार्यस्य करणं सत्वसंपादनं न केनापि कर्तुं शक्यते। अतः कारणव्यापारात्पूर्वं कार्यं कारणे अस्त्येव। यथा तिलेषु सदेव तैलं कारणव्यापारादभिव्यज्यते तथा कारणे कार्यं सदेव सत् अकरणं यस्य तत् वंध्यापुत्रादि तद्विरुद्धत्वादित्यर्थः। न तार्किकादिवत् कार्यस्य प्रागभावश्शंक्यः। तथात्वे अभावात् भावोत्पत्तिः प्रसज्येत। तार्किकाणां तु प्रागभावस्यापि कारणत्वं। तत्सर्वशास्त्रविरुद्धत्वात् अनुपादेयमेवेत्यर्थः। अत्र कार्यः पक्षः। सत्वं साध्यं। असदकरणत्वं हेतुः। इदम् चानुमानं व्यतिरेकि। महदादेस्सर्वस्याऽपि कार्यस्य पक्षत्वादन्वयदृष्टांताभावे व्यतिरेकिदृष्टांतेनैव परिशेषात्साध्यं सिद्धमिति व्यतिरेकित्वम्। एतदेवानुमानमवीतमिति शेषवदितिचोच्यते। कार्यस्य पूर्वमपि सत्त्वे हेत्वंतरमाह उपादानग्रहणादिति। उपादानानां कारणानां ग्रहणात् कार्येण सम्बन्धात् कार्यकारणयोस्सम्बन्धः समवायादिस्तार्किकैरप्यङ्गीकृतः। कारणानां तादृशसम्बन्धः उत्पत्तेः पूर्वमसता कार्येण कथं संघटते? इदमप्यनुमानं व्यतिरेक्येव। अत्रापि कार्यमात्रस्य पक्षत्वात् कार्यस्य कारणसम्बन्धोऽत्र हेतुः। तार्किकपक्षे तदभावात्। सांख्ये तु उत्पत्तेः प्रागपि कार्यस्य

कारणैस्सम्बन्धोऽस्तीति सदेव कार्यं। हेत्वंतरमाह सर्वसंभवाभावा-
दिति। कारणैरसंबद्धस्याऽपि कार्यस्य जन्यत्वे घटवत् पटादीनां
कार्याणामपि घटकारणैरसंबद्धत्वात्। तार्किकमते असंबद्धत्वसामा-
न्येन सर्वं कार्यजातमपि जायेत। तदभावादुत्पत्तेः पूर्वं कार्यं
कारणे सदेव। कार्यमात्रस्य पक्षत्वादिदमप्यनुमानं व्यतिरेक्येव।
हेत्वंतरमाह शक्तस्य शक्यकरणादिति। तत्तत्कारणे तत्तत्कार्यजनन-
सामर्थ्यमस्तीति नान्यकारणादन्यकार्यसंभवः। किन्तु प्रतिनियत-
कार्यसंभवएवेति यदि तार्किकैरुच्यते तदा तत्सामर्थ्यमेव कार्यस्य
पूर्वावस्थेति उत्पत्तेः प्रागपि सदेव कार्यं। वस्तुतस्तु तार्किकैः
शक्तेरनङ्गीकारात् कारणशक्तिरूपस्य सामर्थ्यस्यैवाभावात् अनियत-
कार्यसम्भवस्तदवस्थ एव। अस्माकं तु शक्तस्य शक्तिरूपकार्य-
विशिष्टस्य कारणस्य शक्यकरणात् घटादिकार्यकरणात् पूर्वम् सदेव
कार्यम्। इदमप्यनुमानं पूर्ववत् व्यतिरेक्येव। हेत्वंतरमाह कारण-
भावाच्चेति। कार्यस्य कारणात्मकत्वादित्यर्थः। इदञ्चानुमानं
व्यतिरेक्येव। गवाश्ववत् हिमवद्विन्ध्यवत् कुंडबदरादिवत् कार्य-
कारणयोः पृथक्त्वे संयोगादिसम्बन्धस्स्यात्। स च नात्राऽस्ति।
द्विपलत्रिपलाभरणयोः गुरुत्वभेदवत् नास्ति गुरुत्वभेदस्तंतुपटयोः।
किंतु तंतव एव पटत्वेन परिणताः। अतस्तंतुपटयोर्न भेदः।
यथा कूर्मस्यांगानि कदाचित् कूर्मशरीरे तिरोभवंति कदाचिदावि-
र्भवंति च तथा आविर्भावतिरोभावावेव पटतंतुभावौ। अतस्तंतुभ्यो
नार्थांतरं पटः। अर्थक्रियाभेदादपि नार्थांतरं कार्यम्। विप्रग:

प्रत्येकं यथा मार्गदर्शनं दीपवहनादिना कुर्वंति मिलितास्तु शिबिकां वहंति एवं तंतवः प्रत्येकं कार्यांतरसमर्थाः। मिलिता अंगप्रावरणाय समर्था भवंति। तस्मादर्थक्रियाभेदादपि न कार्यकारणयोर्भेदः। ततः कारणव्यापारात्प्रागपि कार्यबीजादिषु वृक्षादिवत् मृदि घटवच्च अस्तीति सिद्धम्। ९

एवं कार्यस्य सत्त्वं प्रसाध्य प्रधानसाधनाय विवेकज्ञानोपयोगितया कार्यकारणयोर्व्यक्ताव्यक्तयोर्वैरूप्यमाह :—

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिंगं।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्॥ १०

हेतुमदित्यादि :— पूर्वं व्यक्ताव्यक्तज्ञविज्ञानादित्युक्तम्। तत्र व्यक्तस्य स्वरूपमाह। हेतुमत् आविर्भावशीलं कारणजन्यमित्यर्थः। न तु कारणमात्रम्। अनित्यं विनाशशीलम्। तमोभावयुक्तमित्यर्थः। अस्मन्मते आविर्भावतिरोभावयोरेव जन्मविनाशशब्दार्थत्वात्। अव्यापि व्याप्यं कार्यमित्यर्थः। लोकेऽपि कारणं व्यापकं कार्यम् व्यापि च दृष्टं। तद्वत् सक्रियं हानोपादानादिक्रियायुक्तम्। बुद्ध्यादीनां कार्याणां पूर्वदेहहानस्य देहान्तरोपादानस्य प्रसिद्धत्वात्। अनेकं। प्रतिपुरुषं बुद्ध्यादीनां देहादीनां च भिन्नत्वात्। आश्रितं स्वकारणमाश्रित्य व्यवस्थितं। यथा घटो मृदमाश्रितः तद्वत्। लिंगं प्रधानसाधकानुमाने हेतुभावं प्राप्तमित्यर्थः। सावयवं संयोगवान्। कार्याणां घटशरावादीनां परस्परं संयोगः न कारणेन मृदा।

तयोस्तादात्म्यात्। अतः कार्यमेव संयोगि परतन्त्रम्। सर्वमपि कार्यम् स्वकार्यं जननीये कारणसापेक्षं भवति न स्वतन्त्रम्। स्वस्य स्वकारणात्मत्वात्। तद्वन्महदाद्यपि। एवं व्यक्तस्य स्वरूपमभिधाय अव्यक्तस्य स्वरूपमाह विपरीतमव्यक्तमिति। व्यक्तलक्षणविपरीतलक्षणं अव्यक्तं प्रधानमित्यर्थः। यथा अहेतुमत् आविर्भावहीनं कारणमात्रं न तु कदापि कार्यम्। नित्यं तिरोभावरहितं। व्यापि व्यापकं। न कदापि केनचिद्व्याप्यते। निष्क्रियं प्रधानस्यापि परिणामक्रिया अस्त्येव। तथापि हानोपादानादिराहित्यात् निष्क्रियमित्यर्थः। एकं मूलकारणत्वात्। अनाश्रितं प्रधानं तु सर्वकार्याणामाश्रयएव। न कदाचिदपि किंचिदाश्रयतीत्यर्थः। अलिंगम्। प्रधानं तु न कस्यापि लिंगं भवतीति अलिंगम्।

निरवयवं। प्रधानस्य संयोगादयो धर्मा न संति। निरवयवत्वात् मूलकारणत्वाच्च। स्वकार्यैस्सह तादात्म्यमेव। स्वतंत्रम् स्वकार्ये जननीये नान्यापेक्षा प्रधानस्य। ततस्स्वतन्त्रम्। एवं व्यक्तविपरीतलक्षणकमव्यक्तम्। १०

एवं व्यक्ताव्यक्तयोः कार्यकारणयोः वैधर्म्यमभिधाय कार्यकारणभावनिर्वाहकं साधर्म्यमाह :-

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।**
**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्॥ ११**

त्रिगुणमित्यादि :— कार्यकारणयोरर्थक्रियाकारितया वैधर्म्येऽपि

स्वभावतया साधर्म्यमवश्यंभावीत्यर्थः। त्रिगुणं सुखदुःखमोहात्मक-सत्त्वरजस्तमोगुणकं। व्यक्तमव्यक्तं च त्रिगुणमेव। अविवेकि। विवेकः पुरुषधर्मः। उभयमपि विवेकाभाववदित्यर्थः। विज्ञानमेव सुखदुःखमोहात्मकं। न पुनर्भिन्नं विज्ञानात्सुखदुःखादीति बौद्धाः। तदपवादायाह। विषयः ग्राह्यम् न पुनर्ग्राहकम्। व्यक्तमव्यक्तं च विज्ञानविषयमेव न विज्ञानमिति भावः। विज्ञानं तु पुरुषधर्मः। सामान्यं सर्वैः पुरुषैः सामान्येन ग्राह्यम्। अचेतनं जडम्। पुरुष एव चेतनः। प्रसवः कार्यात्मना परिणामः तद्वत्। एवं त्रिगुणत्वादिधर्मकं व्यक्तं महदादि कार्यजातं। तथा प्रधानं। यथा कार्यं त्रिगुणत्वादिधर्मयोगि तथा कारणं प्रधानमपीति भावः। एवं व्यक्ताव्यक्ते साधर्म्येण वैधर्म्येण च निरूप्य ज्ञस्य पुरुषस्य स्वरूपं निरूपयति तद्विपरीतः पुमानिति। पुमान् पुरुषस्तु तद्विपरीतः। ताभ्यां व्यक्ताव्यक्ताभ्यां विपरीतः। विपरीतधर्मवानित्यर्थः। यद्यपि पुरुषस्य व्यक्ताव्यक्तवैपरीत्यमस्ति। तथाऽपि क्वचित्तत्सारूप्यमप्यस्तीति सूचयितुं तथा चेत्युक्तम्। नित्यत्वादिकं प्रधानसाधर्म्यम् अनेकत्वं व्यक्तसाधर्म्यं चास्ति पुरुषस्य। तन्न किंचित्करं। वैपरीत्यस्यैव प्राधान्यमिति भावः। सांख्ये तु त्रयः पदार्थाः व्यक्तमव्यक्तं पुरुषश्चेति। तन्निर्वाहकमेव तत्साधर्म्यं न विशेषाधायकमिति निर्गलितोर्थः। ११

के ते गुणास्तेषां स्वरूपं किमित्यत आह :—

**प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।**
**अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२**

प्रीत्यप्रीतीत्यादिः— गुणाः सत्वरजस्तमोरूपाः प्रीत्यप्रीतिविषादात्मकाः । प्रीतिस्सुखं सत्वस्य स्वरूपं । अप्रीतिर्दुःखं रजसस्स्वरूपं । विषादो मोहस्तमसस्स्वरूपम् । तदात्मकाः तत्स्वरूपाः । अत्रात्मशब्देन सुखादयो गुणानां स्वरूपमेव न धर्मा इत्युक्तं भवति । एवं गुणानां स्वरूपमुक्त्वा प्रयोजनमाह प्रकाशप्रवृत्तिनियमार्था- इति । सत्वस्य प्रकाशः प्रयोजनम् । रजसः प्रवृत्तिः । तमसो नियमः । सत्वतमसी न स्वतः प्रवर्तनशीले । किंतु प्रवृत्तिशीलं रजस्ते प्रवर्तयति । अथ तेषां क्रियामाह अन्योन्याभिभवाश्रयजननमिथुनवृत्तय- इति । तत्र एकमुद्भूतं सत् अन्यद्द्वयमभिभवति । सत्वं रजस्तमसी अभिभूय शान्तां वृत्तिं जनयति । रजः सत्वतमसो अभिभूय घोरां वृत्तिं जनयति । तमः इतरे अभिभूय मूढां वृत्तिं जनयति । तथा अन्योन्याश्रयवृत्तयः एते गुणा न समूलमुन्मूलयंति स्वेतरं । अभिभवमात्रमेव कुर्वंति । अतोऽन्योन्यमाश्रित्यैव गुणा वर्धन्ते । न स्वतन्त्रतया । अन्योन्यजननवृत्तय इति । एतेषामन्यतमः अन्यतमं जनयति परिणामयति । नापूर्वं सृजति । अन्योन्यमिथुनवृत्तयः अन्योन्यं मिथुनीभूय वर्तन्ते । न प्रत्येकम् । अन्योन्यसहचरा एव भवंतीत्यर्थः । न्यूनाधिकभावमात्रमेव गुणानाम् । न तु वियोग इति यावत् । च शब्दस्समुच्चये । १२

पुनर्गुणानामेव स्वरूपमाह :—

**सत्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।**
**गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३**

सत्वमित्यादि :— सत्वं लघु। लघुत्वं च गुरुत्वप्रतिद्वं-द्वित्वम्। उद्गमनादिहेतुर्लाघवम्। यथा अग्नेरूर्ध्वज्वलनम् वायो-स्तिर्यग्गमनं च। इंद्रियाणां वृत्त्युद्गमहेतुश्च लाघवमेव। अन्यथा गुरुत्वे तानीन्द्रियाणि मंदानि स्युः। प्रकाशकं प्रकाशस्वरूपं च। सत्वोद्रेक एव प्रमाणं यथावद्वस्तु गृह्णाति। अन्यथा रजस्तमोऽभिभवे संशयो विपर्ययो वा स्यात्। इष्टं सांख्यविद्भिरङ्गीकृतम्। रजः उपष्टंभकम्। सत्वतमसोरक्रियतया क्रियात्मना रजसा उपष्टब्धौ स्वकार्यम् कुरुतः। अत उपष्टंभकमित्युक्तम्। रजस उपष्टंभे कथं सत्वतमसोः प्रवृत्तिरित्यत आह चलं चेति। चलं प्रवृत्तिस्वभावम्। स्वयं चलन् इतरावपि चालयतीत्यर्थः। यदि गुरुणा तमसा प्रतिबध्यते तदा क्वचिदेव प्रवर्तयति। चकारस्समुच्चायकः। तमो गुरु-लघुप्रतिद्वंद्वि। वरणकमावरणस्वभावम्। यदावृणोति तमः तन्निय-मयति। अतउक्तं नियमार्थं इति। एवकारः त्रिष्वपि सम्बध्यते। परस्परविरोधिनां गुणानां कथमेकक्रियाकारित्वम्? परस्परविरोधेन स्वयमेव विनशेयुरित्यत आह प्रदीपवच्चेति। यथा परस्परं विरुद्धाः वर्तितैलानलाः मिलित्वा दीपतां प्राप्य स्वस्वप्रकाशेन रूपप्रकाशनरूपं कार्यं कुर्वंति; यथा वा वातपित्तादयः शरीरधारणं कुर्वंति एवमेव

विरुद्धाः गुणा अपीति भावः। एतेषां गुणानां स्वप्रयोजनाभावात् किमर्था प्रवृत्तिरित्यत आह अर्थतो वृत्तिरिति। पुरुषस्य भोगापवर्गार्थं गुणानां प्रवृत्तिरित्यर्थः। यथा वृक्षादयः परार्थं फलंति मेघाः परार्थं वर्षंति तथा गुणानां प्रवृत्तिरपि परार्थैव। सर्वेषां वस्तूनां सुखदुःखमोहात्मकत्वात् तदभिन्नत्रिगुणात्मकत्वम्। यथा एकमेव रत्नं स्वप्राप्त्या कंचित्पुरुषं यतमानं सुखयति; स्वाप्राप्त्या यतमानमेव कंचिद्दुःखयति; तटस्थं कंचिदयतमानं मोहयति। एवं सर्वमपि वस्तु सुखदुःखमोहात्मकगुणत्रयस्वरूपमेव। तस्मात् गुणाः परस्पराभिभवशीलाः सहचारस्वभावाश्च भवंतीति यावत्। १३

पूर्वोक्ताः अविवेकित्वविषयत्वसामान्यत्वाचेतनत्वप्रसवधर्मित्वादयः प्रत्यक्षेषु पृथिव्यादिषु संभवन्तु। प्रकृतावननुभूतेषु गुणेषु संती कथं ज्ञायत इत्यत अह :—

अविवेक्यादेस्सिद्धिस्त्रैगुण्यात्तद्विपर्ययेऽभावात्।
कारणगुणात्मकत्वात्कार्यस्याव्यक्तमपि सिद्धम्॥ १४

अविवेक्यादेरितिः—त्रिगुणात्मकेऽव्यक्ते अविवेक्यादेः अविवेकित्वादेः। भावप्रधानो निर्देशः। सिद्धिः त्रैगुण्यात् सुखदुःखमोहात्मकत्रिगुणस्वभावात्। अत्रायं प्रयोगः :— प्रधानं अविवेकित्वादिमत्। सुखदुःखमोहात्मकत्वात्। यद्यत् सुखदुःखमोहात्मकं तत्तदविवेकित्वादिमत्। यथा व्यक्तम्। इत्यन्वयदृष्टांतः प्रसिद्धत्वान्नोक्तः। व्यतिरेकदृष्टांतमाह तद्विपर्ययेऽभावादिति। तद्विपर्यये अविवेकित्वादिरहिते पुरुषे

त्रैगुण्यात्मकसुखदुःखमोहाभावात्। यत्र यत्र अविवेकित्वाद्यभावः तत्र तत्र सुखदुःखमोहात्मकत्वाभावः। यथा पुरुष इति व्यतिरेक-दृष्टांतः। एवमुभयदृष्टांतसत्त्वात् त्रिगुणात्मकेऽव्यक्ते अविवेकित्वादि-सिद्धिरिति भावः। ननु अव्यक्तमेवासिद्धम् कथं तत्राविवेकित्वादि-विचार इत्यत आह। कार्यस्य कारणगुणात्मकत्वात्। यथा पटादि कार्यम् तन्त्वादि कारणगुणात्मकं दृष्टम् तथा महदादिकार्येण कारणगुणात्मकेन भवितव्यम्। ततो महदादिकारणं सुखदुःखमोहा-त्मकं त्रिगुणमव्यक्तं सिद्धम्। अपीति। यथा भूतादि प्रपंचकारणं महदादि सिद्धम् तथा महदादि कारणं अव्यक्तमपि सिद्धमिति भावः। १४

व्यक्तेभ्यः परमाणुभ्यः व्यक्ताः द्व्यणुकादिमहापृथिव्यंता उत्पद्यन्ते। कारणगुणाश्च कार्ये समुत्पद्यंते। किमव्यक्तेन त्रिगुणात्म-नेत्यत आह :—

भेदानां परिमाणात् समन्वयाच्छक्तितः प्रवृत्तेश्च।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ १५

भेदानामित्यादि :— अव्यक्तं सामान्यम् महदादयः विशेषाः भेदानां महदादीनां विशेषाणां कारणं सामान्यमव्यक्तमस्तीति उत्तरश्लोकेनान्वयः। तत्र हेतूनाह। परिमाणात् भेदानां परिमित-त्वात्। महदादीनां परिमितिरस्ति इयदीदृशमस्तीति। परिमितिर्नाम अव्याप्तित्वं। महदादयः स्वकार्येण व्याप्नुवन्ति। न कारणमव्यक्तम्।

अतः परिमितानि महदादीनि । अयमत्र प्रयोगः :- व्यक्ताः महदादयः अपरिमिताव्यक्तकारणवन्तः । तदपेक्षया परिमितत्वात् । अपरिमित-मृत्कारणकघटादिवत् । यथा व्यक्तघटादिकमव्यक्तावस्थापन्नं मृदित्यु-च्यते तथा व्यक्ताः महदादयः अव्यक्तावस्थापन्नाः सामान्यं प्रकृति-रित्युच्यंत इति भावः । हेत्वंतरमाह समन्वयात् । भिन्नानां महदादीनां अभिन्नस्वकारणसमन्वयात् । समन्वयो नाम सरूपता । कार्यकारणयोस्सारूप्यस्यावश्यकत्वात् सुखदुःखमोहसमन्विताः बुध्या (महदा) दयः स्वसरूपाव्यक्तकारणका इति सुखदुःखमोहात्मकं मूल-कारणमव्यक्तं सिद्धम् । यथा घटादयः स्वसरूपमृदात्मकाव्यक्त-कारणकाः तथेत्यर्थः । हेत्वंतरमाह शक्तितः प्रवृत्तेश्च । कारणशक्तितः कार्यप्रवृत्तेः । नाशक्तं कारणं कार्यम् जनयति । यत्र कार्य यत्कारणं शक्तं तत् तदेव जनयति । यथा मृत् घटमेव जनयति न पटम् तथेत्यर्थः । कारणगता शक्तिर्नाम कार्यस्याव्यक्ततैव । न ततो भिन्ना । अतोऽपि अव्यक्तं कारणं सिद्धम् । हेत्वंतरमाह कारणकार्यविभागात् । यथा कूर्मे सन्त्येवाङ्गानि निस्सरन्ति विभज्यन्ते च तथा कारणे सन्त्येव कार्याणि निस्सरन्ति विभज्यन्ते च । एतत्कारणं एतानि कार्याणि चेति । हेत्वंतरमाह अविभागाद्वैश्वरूप्यस्येति । वैश्वरूप्यस्य महदादिजगतः कारणे अविभागात् अविभागापत्तेः । अयं भावः —यथा घटादिकार्याणि कारणे मृदादौ संत्येव आविर्भवंति विभज्यन्ते च; पुनः कारणे विशंतः कारणमव्यक्तयंति तथा सर्वे । स्वकारणे प्रधाने सन्नेव महान् प्रधानात् आविर्भवति

विभज्यते च। स्वकारणे महति सन्नेव अहंकारः महत आविर्भवति विभज्यते च। एवमेव महापृथिव्यन्ताः स्वकारणेषु संत एव स्वकारणेभ्य आविर्भवंति विभज्यन्ते च। पुनः प्रतिसर्गे महापृथिव्यादयः स्वकारणेषु तन्मात्रादिषु विशंतः स्वकारणमव्यक्तयन्ति। एवं क्रमेण महदन्तम् कार्याणि कारणेषु विशंति कारणमव्यक्तयन्ति। महच्च स्वकारणे प्रधाने विशत् प्रधानमव्यक्तयति। प्रधानस्य तु न क्वचिन्निवेशः। अतः प्रधानमेव परमाव्यक्तं मूलप्रकृतिरिति चोच्यते। अव्यक्तस्य तु क्वचिन्निवेशे प्रमाणाभावात्। तस्मात् वैश्वरूप्यस्य नानारूपस्य कार्यस्य कारणे विभागाविभागाभ्यां सर्वकारणं अव्यक्तं अस्ति। न परमाणव इति सिद्धम्। १५

एवं पूर्वश्लोकोक्तेभ्यः कारणेभ्यः कारणास्तित्वप्रतिज्ञापूर्वकं तस्य कारणस्य प्रवृत्तिमाह :—

कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतस्समुदयाच्च।
परिणामतस्सलिलवत् प्रतिप्रतिगुणाश्रयविरोधात्॥ १६

कारणमित्यादि :— कारणं परमाव्यक्तमस्ति। तत्प्रवृत्तिमाह। तदव्यक्तं प्रवर्तते। प्रतिसर्गे प्रलयावस्थायां त्रिगुणतः प्रवर्तते। महदादीनां विशेषाणां प्रलयकाले त्रिगुणात्मकं अव्यक्तं विशति। गुणास्तु नित्यं परिणामशीलाः। ततः प्रलयकाले सत्त्वं सत्त्वरूपेणैव रजः रजोरूपेणैव तमः तमोरूपेणैव सदृशपरिणामेनैव प्रवर्तते नान्येनाभ्यम्यते। तत उक्तम् त्रिगुणत इति। ततः प्रतिसर्गे गुणा·

स्वरूपेणैव प्रवर्तन्ते न विशेषभावमापद्यंत इति भावः। सर्गकाले तु। समुदयाच्चेति। प्रवर्तत इत्यनुवर्तते। समुदयात् समेत्य परस्पर-सहकारमुपेत्य उदयात्। गुणप्रधानभावमुपेत्य महदादिरूपेण प्रवर्तन्ते इत्यर्थः। ननु एकरूपाणां गुणानां सर्गकालेऽपि कथं नानारूप-प्रवृत्तिरित्यत आह परिणामतस्सलिलवदिति। सलिलवत्परिणामात्। यथा मेघविनिर्मुक्तं शुक्लरूप-मधुररस-युक्तं जलं नानाभूप्रदेशेषु पतत् तदवष्टंभेन तत्तद्भूतलस्पर्शात् नानारूपतां नानारसतां च भजते एवं सत्वादयो गुणा अपि गुणान्तरस्पर्शमासाद्य तत्तद्गुणावष्टंभेन नाना-रूपतां भजंतीत्यर्थः। तदेवाह प्रतिप्रतिगुणाश्रयविशेषादिति। तत्तद्गुणाश्रयेण गुणानां यो विशेषः तस्मादित्यर्थः। १६

एवमव्यक्तस्य प्रवृत्तिमुपपाद्य पुरुषास्तित्वं साधयति :—

**संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।**
**पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥ १७**

संघातेत्यादि :- पुरुषः अव्यक्तमहदादिभ्यो व्यतिरिक्तः अस्ति। कुतः संघातपरार्थत्वात्। संघातस्य अव्यक्तमहदादि-संघातस्य। परार्थत्वात् परार्थत्वनियमात्। यथा स्थलगृहभांडादि-संघातः परार्थः प्राण्युपभोगार्थो दृष्टः तथा अव्यक्तादिसंघातोऽपि। संघातत्वं चैषां सुखदुःखमोहादित्रिगुणात्मकत्वम्। तस्मात् तेभ्यो व्यतिरिक्तः पुरुषोऽस्ति। अत्राऽयं प्रयोगः :- अव्यक्तमहदादयः परार्थाः संघातत्वात्। स्थलगृहभांडादिसंघातवत्। ननु गृहादिसंघातः त्रिगुणा-

त्मकशरीराद्यर्थो दृष्टः। तद्वत् पुरुषोऽपि त्रिगुणात्मक एवेत्यत आह त्रिगुणादिविपर्ययात्। आदिपदेन अविवेकित्वादयो गृहीताः। संघातात्परोऽपि त्रिगुणाद्यात्मकश्चेत् सोऽपि संघातांतर्गत एव भवति। ततः अततः परिशेषात् अत्रिगुणाद्यात्मकः असंहतः परः अङ्गीकर्तव्य एव। स एव पुरुषः असंहतः विवेकी चेतन इत्यादिकमवश्यमभ्युपगन्तव्यम्। अत्रायं प्रयोगः :— परः पुरुषः असंहतः। त्रिगुणादिविपर्ययात्। व्यतिरेकेण घटादिवत्। हेत्वंतरमाह अधिष्ठानादिति। अधिष्ठानात् अधिष्ठीयमानत्वादित्यर्थः। यद्यत्संघातात्मकं तत्तत्परेणाधिष्ठीयमानं दृष्टं। यथा रथादि। तथा बुद्ध्यादिसंघातोऽपि परेणाधिष्ठीयमानं। स च परः पुरुष एव। बुद्ध्यादयः पुरुषाधिष्ठिताः। संघातत्वात्। रथादिवदिति प्रयोगः। हेत्वंतरमाह भोक्तृभावादिति। सुखदुःखमोहाद्यात्मकाः बुध्यादयस्सर्वे त्रिगुणत्वात् भोग्याः। ते च भोक्तारमन्तरेण न सिध्यंति। यतस्ते अचेतनाः। ततश्चेतनोऽन्यो भोक्ता अस्ति स च भोक्ता पुरुष एव। त्रिगुणाद्यात्मकः। भोग्याः बुध्यादयः चेतनभोक्त्रन्विताः। अचेतनत्वात्। स्रक्चंदनादिवत्। इति प्रयोगः। हेत्वंतरमाह कैवल्यार्थं प्रवृत्तेश्च। कैवल्यं च आत्यंतिकदुःखत्रयप्रशांतिः। तदर्थं शास्त्राणां सर्वज्ञकपिलादिमहर्षीणां च प्रवृत्तिः। पुरुषाभावे अव्यक्तादिसंघातस्य नित्यं सुखदुःखाद्यन्वितत्वात् तदुच्छेदस्य कर्तुमशक्यत्वात् शास्त्रादीनां वैयर्थ्यं स्यात्। ततः केवलः पुरुषः असंहतोऽस्तीति अवश्यमभ्युपेयः। पुरुषः संघातादतिरिक्तः अस्ति। कैवल्यबोधकशास्त्राधिकारित्वात्।

व्यतिरेकेण घटादिवदिति प्रयोगः। तस्मात् अव्यक्तात् प्रकृतेः व्यक्तेभ्यः महदादिभ्यश्च परः असंहतः विवेकादित्रैगुण्यादिलक्षणः पुरुषः अवश्यमभ्युपगन्तव्यइति सिद्धम्। केचित् तु अव्यक्त मात्मेति केचिन्महदिति केचित् अहंकार इति इंद्रियाणीति च वदन्ति। तेषां सर्वेषां संघातांतर्गतत्वात् नात्मत्वमिति निर्गलितोऽर्थः।

एवं पुरुषः प्रसाधितः। स च पुरुषः एकः अनेकोवेति विचिकित्सायामाह :—

> जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
> पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव॥ १८

जननेत्यादिः :— जननमरणकरणानां प्रतिनियमात्। जननं नाम देहेंद्रियादिभिस्सम्बन्धः। मरणं नाम तेषां परित्यागः। करणानि बुद्ध्यादीनि त्रयोदश। तेषां प्रतिनियमात् व्यवस्थितत्वात्। पुरुषैकत्वे स नोपपद्यते। पुरुषैकत्वे तु एकस्मिन् जायमाने सर्वे जायेरन्। एकस्मिन्नन्धे सर्वे अन्धा भवेयुः। तददर्शनात् प्रतिक्षेत्रं पुरुषो भिन्न इति सिद्धम्। पुरुषः प्रतिक्षेत्रं भिन्नः। जननमरण-करणादिव्यवस्थाभेदात्। घटवदिति प्रयोगः। हेत्वंतरमाह अयुग-पत्प्रवृत्तेश्चेति। अंतःकरणवर्तिनी प्रवृत्तिः पुरुषे उपचर्यते। पुरुषैकत्वे एकस्मिन्प्रयतमाने सर्वे प्रयतेरन्। एकस्य गतौ सर्वेषा-मपि गतिः स्यात्। न तथा दृश्यते। एको गच्छति। एकस्तिष्ठति। एकश्शेते। एवमादिदर्शनात् पुरुषः प्रतिक्षेत्रं भिन्नः। अत्र प्रयोग-

स्सुबोधः । हेत्वंतरमाह त्रैगुण्यविपर्ययाच्चैवेति । त्रयो गुणास्त्रैगुण्यम् । तस्य विपर्ययात् भेदात् । ऊर्ध्वलोकस्थाः सत्वबहुलाः, मनुष्यादयो रजोबहुलाः स्थावरादयस्तमोबहुलाश्च दृश्यन्ते । सर्वत्र पुरुषैकत्वे तन्न स्यात् । ततश्च पुरुषः प्रतिक्षेत्रं भिन्न इति । सर्वत्र चशब्दस्समुच्चयार्थः । एवकारः सिद्धमित्यनेनान्वेति । पुरुषबहुत्वं सिद्धमेवेत्यर्थः । १८

एवं पुरुषबहुत्वं प्रसाध्य तस्य धर्मानाह :—

तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९

तस्मादित्यादि :- तस्माच्च विपर्यासात् त्रैगुण्यविपर्ययात् । चशब्देन अत्रिगुणत्वेन साकं विवेकित्वमविषयत्वं असाधारणत्वं चेतनत्वं अप्रसवधर्मित्वं च समुच्चीयते । तत्र चेतनत्वेन अविषयत्वेन च अस्य पुरुषस्य साक्षित्वं द्रष्टृत्वं च सिद्धम् । चेतनो हि साक्षी भवति । नाचेतनः । तथात्वे घटादीनामपि साक्षित्वं स्यात् । यथा अर्थिप्रत्यर्थिनोः चरितं विषयं पश्यन् साक्षी भवति तथा प्रकृतिचरितं विषयं पश्यन् पुरुषस्साक्षी भवति । नहि विषयो विषयं पश्यति। उभयोरप्यचेतनत्वात् । अचेतनं खलु चेतनस्य विषयो भवति । तस्माच्चेतनत्वादविषयत्वाच्च पुरुषस्य साक्षित्वं सिद्धम् । अतएव द्रष्टृत्वमपि सिद्धम् । लोके द्रष्टा सन् साक्षी भवति । तथा पुरुषोऽपि प्रकृतिचरितस्य द्रष्टा सन् साक्षी भवतीत्यर्थः । अत्रैगुण्यादेव कैवल्यं सिद्धम् । कैवल्यं नाम आत्यंतिकदुःखाभावः । तच्च पुरुषस्य स्वाभाविकं । नागन्तुकं ।

तथात्वे दुःखत्रयात् अनिर्मोक्षप्रसंगस्स्यात । किंतु सुखदुःखमोहात्मकेन त्रैगुण्येन तिरोहितं शास्त्राभ्यासादिना अभिव्यक्तं स्यात् । ततः पुरुषस्य स्वयमत्रिगुणत्वात् । कैवल्यं तस्य सहजमिति सिद्धम् । अत्रैगुण्यादेव माध्यस्थ्यं च सिद्धम् । सुखी दुःखी च न मध्यस्थो भवति । ताभ्यामभिभूतत्वात् । सुखदुःखरहितस्तु मध्यस्थो भवति । माध्यस्थ्यं नाम औदासीन्यम् । तत्स्वाभाविकं पुरुषस्य सिद्धम् अत्रैगुण्यात् । विवेकित्वादप्रसवधर्मित्वाच्च अकर्तृभावश्च सिद्धः । अविवेकी प्रसवधर्मी च कर्ता दृष्टः । तदुभयाभावात् स्वाभाविकमकर्तृत्वं पुरुषस्येति सिद्धम् । १९

ननु अहं करोमीति कर्तृत्वमुपलभ्यते । अचेतनायाः प्रकृतेः कर्तृत्वासम्भवात्, चेतनस्य पुरुषस्य कर्तृत्वानङ्गीकारात्, कर्तृत्वं कस्येत्यत्र आह :—

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिंगं ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ २०

तस्मादित्यादि :-यस्माद्वस्तुतः कर्तृत्वं पुरुषस्य नास्ति तस्मादहं करोमीति प्रत्ययो भ्रांतिरिति भावः । तदेवाह । लिंगं अव्यक्तमहदादि सर्वं । तत्संयोगात् तस्य पुरुषस्य संयोगात् सन्निधानात् । स्वयमचेतनमपि चेतनावदिव चैतन्ययुक्तमिव भवति भातीत्यर्थः । न तु वस्तुतः चैतन्ययुक्तम् । किंतु अचेतने चैतन्यभानं भ्रांतिरेव । पुरुषश्च उदासीनोऽपि । तथा तत्संयोगात् तस्य लिंगस्य सन्निधानात् ।

गुणकर्तृत्वे च गुणानां कर्तृत्वेऽपीत्यर्थः। कर्तेव भवति भाति। न तु कर्ता वस्तुत इति भावः। तद्धानमपि भ्रांतिरेवेत्यर्थः। परिशेषात्संयोगस्य कर्तृत्वमिति भावः। २०

भिन्नयोस्संयोगः परस्परोपकार्योपकारकभावं विना न संभवतीति तदुपकारमेवाह :—

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**
**पंग्वंधवदुभयोरपि संयोगस्तत्कृतस्सर्गः॥ २१**

पुरुषस्येत्यादि :—तत्र प्रथमं प्रधानस्य उपकारं दर्शयति पुरुषस्येति। कर्तरि षष्ठी। प्रधानस्य पुरुषकर्तृकदर्शनार्थं। प्रधानं स्वसत्तायै पुरुषकर्तृकदर्शनमपेक्षते। ततस्तस्य भोग्यं भवति। ततः प्रधानस्य भोग्यत्वार्थं भोक्त्रपेक्षाऽस्तीति प्रधानस्योपकारः। अथ पुरुषस्योपकारमाह। तथा प्रधानवत्। पुरुषस्य कैवल्यार्थं ततः स्वभोग्येन प्रधानेन पुरुषः तद्गतं दुःखं स्वस्मिन्नभिमनुते। ततो दुःखत्रयाभिभूतः स्वाभाविकस्वकैवल्यार्थं सत्वपुरुषान्यथाख्यातिमभिलषति। सा च प्रधानविवेकमंतरेण न संभवतीति पुरुषस्य प्रधानकृत उपकारः। एतस्मिन्नुपकार्योपकारकभावे दृष्टांतमाह पंग्वंधवदिति। पंगुवत् अंधवदित्यर्थः। पंगुः गमनासमर्थः। अंधः मार्गदर्शनासमर्थः। तावुभौ केनचिद्वनमध्यं नीतौ तत्र त्यक्तौ। तत्र पंगुरंधमवदत्—अहं मार्गदर्शनसमर्थः। किंतु गंतुं न शक्नोमि इति। अंध अवदत् – अहं गमनसमर्थः। किंतु मार्गं न पश्यामि। भवंतं स्कंधमारोप्य तव

दर्शनसामर्थ्येन महद्दुर्गं तीर्त्वा त्वया सह निरपायप्रदेशं गच्छामीति। एवमुभयोरपि दुःखोपहतिरूपकार्यसिद्धिरभूत्। एवं पंगुवत्पुरुषः-अंधवत्प्रधानम्। तस्मात्पुरुषारूढं प्रधानं सर्वक्रियाकरणसमर्थं भवति। एवमुभयोरपि पंग्वन्धवत् संयोगः। सर्गस्सर्वोऽपि तत्कृतः तत्संयोग-कृतः परिशेषात्सर्गकर्तृत्वं संयोगस्येति भाति। एतत्संयोगस्यानादित्वात् पूर्वं भोगाय संयुक्तोऽपि अपवर्गाय पुनस्संयुज्यत इति भावः। स च संयोगो नलिनीदलजलबिंदुसंयोगसदृशः। महदादिभूतान्तसर्गं विना भोगमोक्षयोरसम्भवात् तत्संयोगकृत एव सर्वोऽपि सर्ग इति भावः।　　२१

अथ तादृशसर्गक्रममाह :—

**प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः।**
**तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि॥**　　२२

प्रकृतेरित्यादि :—ननु पूर्वस्मिन् श्लोके संयोगकृतस्सर्ग-इत्युक्तम्। अधुना प्रकृतिकृत इत्युच्यते। तत्कथं सङ्गच्छत इति चेन्न। संयोगस्य निमित्तत्वेन प्रकृतेरुपादानत्वेन च स्वीकारात्। प्रकृतिः प्रधानं। तस्मात् महान् महत्तत्त्वम्। तस्मान्महत्तत्त्वादहंकारः। तन्नामकं तत्वम्। तस्मात् अहंकारात् षोडशको गणः। ज्ञानेंद्रियाणि पंच, कर्मेंद्रियाणि पंच, मनः, पञ्च तन्मात्राणि च सम्भूय षोडश। तस्मादपि षोडशकात् षोडशकांतर्गणात् अंतर्गतेभ्य इत्यर्थः। पञ्चभ्यस्तन्मात्रेभ्यः शब्दादिभ्यः पञ्च भूतानि पृथिव्यादीनि जातानीत्यर्थः।

तत्र शब्दतन्मात्रात् आकाशो जातः शब्दगुणकः। शब्दतन्मात्र-सहितात् स्पर्शतन्मात्रात् शब्दस्पर्शगुणको वायुर्जातः। एवं पूर्व-पूर्वतन्मात्रयुक्तात् उत्तरोत्तरतन्मात्रात् तत्तत्पूर्वपूर्वगुणयुक्तं तत्तद्भूतं जातमित्यर्थः। २२

एवं सामान्यतः सर्गमुक्त्वा विशेषतस्सर्गक्रमं वक्तुकामः सामान्यविशेषाभ्यां प्रकृते पूर्वं लक्षितत्वात् अधुना महत्तत्वस्य स्वरूपं विशेषतो निरूपयति :—

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्।
सात्विकमेतद् रूपं तामसमस्माद्विपर्यस्तम्॥ २३

अध्यवसायइत्यादि :—अध्यवसायो बुद्धिः महत्तत्त्वमित्यर्थः। महत्तत्त्वस्य समष्ट्या एकस्यापि प्रकृत्या प्रतिपुरुषं विभज्य विनियुक्तत्वात नानात्वम्। अध्यवसाय इति बुद्धिधर्मः। धर्मधर्मिणोरभेद-विवक्षयोक्तम्। अध्यवसायो बुद्धिरिति। लोके पुरुषः इंद्रियैरालोच्य मनसा आलोच्य अहंकारेणाभिमत्य कर्तव्यमेतन्मयेति बुद्ध्या अध्यवस्यति। स चाध्यवसायः चित्सन्निधानात् आपन्नचैतन्याया बुद्धेः असाधारणो व्यापारः। अतः बुद्धेरध्यवसायो व्यावर्तकं लक्षणम्। एवं बुद्धिं लक्षयित्वा विवेकज्ञानोपयोगाय तद्धर्मानाह। तद्धर्माः द्विविधाः सात्विकास्तामसाश्चेति। रजसः प्रवर्तकत्वमात्र-पर्यवसानात् न पृथक् धर्मत्वम्। तत्र धर्मः ज्ञानं विरागः ऐश्वर्यं च सात्त्विकाः। अतः एतेषां रूपं सात्विकम्। अस्मात्सात्विकात्

विपर्यस्तं तामसं रूपमिति शेषः। अधर्मः अज्ञानं अवैराग्यं अनैश्वर्यं च तामसा इत्यर्थः। तत्र अभ्युदयनिःश्रेयसहेतुर्धर्मः। यागाद्यनुष्ठानजन्यो: धर्मः अभ्युदयहेतुः। अष्टांगयोगाद्यनुष्ठानजनितो निःश्रेयसहेतुः प्रकृतिपुरुषान्यथाख्याति. ज्ञानं। विरागो वैराग्यम् रागाभावः। स चतुर्विधः - यतमान-व्यतिरेक -एकेंद्रिय -वशीकार-भेदात्। रागादिभिः कषायैरिंद्रियेषु प्रवर्त्यते। तत्प्रवृत्तिर्माभूदिति तत्परिपाकायारम्भरूपो यत्नः यतमानसंज्ञा। एवं यत्ने कृते केचित्कषायाः पक्वा भवन्ति। केचित्पक्ष्यंते। तत्र पक्ष्यमाणेभ्यः कषायेभ्यः पक्वानां व्यतिरेकेण निश्चय: व्यतिरेकसंज्ञा। पक्वानां सर्वेषां कषायाणां इंद्रियप्रवृत्तावसमर्थत्वात् औदासीन्येन केवलमनस्यवस्थानमेकेंद्रियसंज्ञा। तस्याऽपि निवृत्तिः। दृष्टेष्वानुश्रविकेषु च विषयेषु प्राप्तेष्वपि तत्र औत्सुक्यमात्रस्याऽपि अभावः वशीकारसंज्ञा।

एवं वैराग्यं चतुर्विधम्। ऐश्वर्यम् अणिमादिप्रादुर्भावः। येन शिलामपि प्रविशति सोऽणिमा - अणुत्वस्य परमावधिरित्यर्थः। येन सूर्यकिरणमालम्ब्य सूर्यलोकं याति स लघिमा लघुभावः - लघुत्वस्य परमावधिरित्यर्थः। येन समस्तेऽपि ब्रह्माण्डे समवायं प्राप्नोति स महिमा - महत्त्वस्य परमावधिः। येन मशकशरीरे गजशरीरेऽपि तिष्ठन् नोत्थापयितुं शक्यते स गरिमा - गुरुत्वस्य परमावधिः। यया अंगुल्यग्रेण चन्द्रं स्पृशति सा प्राप्तिः - प्राप्तेः परमावधिरित्यर्थः। येन स्वेच्छाया अभिघातो न भवति तत्प्राकाम्यम्। तत्र उदक इव भूमौ उन्मज्जति निमज्जति च। येन भूतभौतिकसृष्टिस्थिति-

संहारेषु ईष्टे प्रभवति तदीशत्वम्। तत्र सत्यकामत्वसत्यसंकल्पत्वादयो भवन्ति। यथाऽस्य संकल्पो भवति तथा भूतानि प्रवर्तते। प्राकृतानां तु जनानां भूतानुसारेण संकल्पो भवति। योगिनस्तु संकल्पानुसारेण भूतानि प्रवर्तंत इत्यर्थः। येन भूतभौतिकं वशी भवति तद्वशित्वम्। एते चत्वारः सात्विका बुद्धिधर्माः। तामसा बुद्धिधर्मास्तु तद्विपरीताः। अधर्म-अज्ञान-अवैराग्य-अनैश्वर्य-संज्ञकाश्चत्वारः सम्भूयाष्टौ बुद्धिधर्माः। २३

एवं महत्तत्त्वं बुद्धिं लक्षयित्वा अहंकारतत्त्वं विशेषतो निरूपयति :–

**अभिमानोऽहंकारस्तस्माद् द्विविधः प्रवर्तते सर्गः।**
**एकादशकश्च गणस्तन्मात्रपञ्चकश्चैव ॥ २४**

अभिमान इत्यादि :— आलोचितेषु मतेषु च विषयेषु 'मदर्था एवामी विषयाः। अहमत्राधिकृतश्शक्त।' इति योऽभिमानः स एवाहंकारः। पश्चादेव बुद्धेरध्यवसायो जायते - मयैतत्कर्तव्यमिति। तस्मात् अहंकारात् द्विविधः सर्गः प्रवर्तते। द्वैविध्यमेवाह- एकादशकश्चगणः। ज्ञानेंद्रियकर्मेंद्रियमनोरूपो गण एकस्तन्मात्रपञ्चकश्चैव शब्दस्पर्शरूपरसगन्धतन्मात्रपञ्चकरूपो द्वितीयः। एवकारेण अहंकारात् द्विविधएव सर्गः। नत्वन्यस्तृतीयोऽस्तीति अवधारितम्। २४

एकस्मादहंकारात् कथं द्विविधस्सर्गः प्रवृत्त इत्यत आह :–

**सात्विक एकादशकः प्रवर्तते वैकृतादहंकारात्।**
**भूतादेस्तन्मात्रस्स तामसस्तैजसादुभयम् ॥ २५**

सात्विक इत्यादि :—अहंकारस्त्रिविधः - वैकृतः तैजसः भूतादिरिति। वैकृतस्सात्विकः। तैजसो राजसः। भूतादिस्तामसः। तत्र वैकृतात् लघोः प्रकाशात् सात्विकादहंकारात्। सात्विको लघुः प्रकाशकः। एकादशकः ज्ञानेंद्रियकर्मेंद्रियमनोरूपः इंद्रियात्मकः सर्गः प्रवर्तते। भूतादेस्तामसाहंकारात्। तन्मात्रसर्गः तामसः। तामसाहंकारजन्यत्वादित्यर्थः। ननु द्वाभ्यामेवाहंकाराभ्यां सर्वस्य सर्गस्य सम्भवे किं प्रयोजनं तैजसेनेत्यत आह—तैजसादुभयं। यद्यपि तैजसान्न पृथक् सर्गः प्रवर्तते। किंतु सत्वतमसोरक्रियत्वात् स्वकार्यैकरणसामर्थ्यं नास्तीति चंचलेन रजसा चालितौ स्वस्वकार्यं कुरुत इति तयोः क्रियोत्पादनद्वारेण रजसः तदुभयकारणत्वमस्तीत्युक्तम्—तैजसादुभयमिति। २५

अथ सात्विके एकादशगणे ज्ञानेंद्रियकर्मेंद्रियदशकं निरूपयति :—

**बुद्धींद्रियाणि चक्षुश्श्रोत्रघ्राणरसनत्वगाख्यानि।**
**वाक्पाणिपादपायूपस्थान् कर्मेंद्रियाण्याहुः॥ २६**

बुद्धीत्यादि :—सात्विकाहंकारजन्यत्वमिंद्रियाणां लक्षणम्। तानि द्विविधानि। चक्षुरादीनि ज्ञानेंद्रियाणि पञ्च। वागादीनि कर्मेंद्रियाणि पञ्च। आहुः सांख्याचार्या इति शेषः। तत्र रूपग्राहकं चक्षुः। शब्दग्राहकं श्रोत्रम्। गंधग्राहकं घ्राणं। रसग्राहकं रसनम्। स्पर्शग्राहकमिंद्रियं त्वक्। कर्मेंद्रियाणां स्वरूपमुत्तरत्र वक्ष्यते। २६

अथ एकादशमिंद्रियमाह :–

**उभयात्मकमत्र मनस्संकल्पकमिंद्रियं च साधर्म्यात् ।**
**गुणपरिणामविशेषात् नानात्वं बाह्यभेदाश्च ॥ २७**

उभयेत्यादि :–अत्र एकादशस्विंद्रियेषु मध्ये मनः उभयात्मकं-ज्ञानेंद्रियं कर्मेंद्रियं च। ज्ञानेन्द्रियाणां कर्मेंद्रियाणां च मनोऽधिष्ठितानामेव स्वकार्यकारणसामर्थ्यात् मनस उभयेन्द्रियत्वम्। संकल्पकं विवेचकं। प्रथममिन्द्रियैस्सामान्येन आलोचितं गृहीतं निर्विकल्पकं वस्तु जात्यादिभिर्मनो विवेचयति। ततः अभिमानादिक्रमेण बुद्धिरध्यवस्यति। अतो मनः विवेचकं। एतद्विवेचकत्वं मनसः असाधारणं लक्षणम्। इन्द्रियं च मनसः बुद्ध्यहंकारयोरिव असाधारणलक्षणस्य सत्त्वेऽपि इन्द्रियत्वमप्यस्तीति भावः। इन्द्रियत्वं च सात्विकाहंकारजन्यत्वम्। तादृशेन्द्रियधर्मस्य मनस्यपि सत्त्वात् साधर्म्यादित्युक्तम्। ननु व्युत्पत्तिसामर्थ्यात्–इन्द्रियत्वं इंद्रलिंगत्वम्, इंद्रः पुरुषः-तल्लिंगत्वस्य महदादिष्वपि सत्त्वात् तेषामपींद्रियत्वं स्यात्–इति चेन्न। इंद्रलिंगत्वमिति व्युत्पत्तिमात्रमेव - न तु प्रवृत्तिनिमित्तमिति भावः। एकसात्विकाहंकारजन्यानां तेषां कथं नानात्वमित्यत्र आह–गुणपरिणामविशेषान्नानात्वम्। तत्तच्छब्दादिभोगहेत्वदृष्टविशेषैः गुणानां परिणामात् नानात्वमिंद्रियाणामित्यर्थः। बाह्यभेदाश्च। चकारः सादृश्यबोधकः। बाह्यभेदा इवेत्यर्थः। एकस्मात् मृद्रूपात् कारणात् घटशरावादयो यथा तथेत्यर्थः।

एवमिंद्रियाणां स्वरूपमुक्त्वा मनोव्यापारस्यालोचनस्योक्तत्वात् इतरेषामिंद्रियाणां व्यापारानाह :-

**शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः ।**
**वचनादानविहरणोत्सर्गानंदाश्च पञ्चानाम् ॥ २८**

शब्देत्यादि :—पञ्चानां ज्ञानेंद्रियाणां शब्दादिषु विषयेषु आलोचनमात्रम् । आलोचनं - सामान्येन इदं किञ्चिदिति दर्शनं-ग्रहणमात्रम् । तन्मात्रमेव वृत्तिः व्यापारः । न तु विवेचनादिकं जात्यादिभिः । पञ्चानां कर्मेंद्रियाणां क्रमेण वचनादानविहरणोत्सर्गा-नंदाः वृत्तय इत्यर्थः । वाक्पाणिपादपायूपस्थानां क्रमेण वृत्तय इति भावः । २८

मनोबुद्ध्यहंकारात्मकमंतःकरणत्रयं, तस्य वृत्तिमाह :-

**स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।**
**सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९**

स्वेत्यादि :—अंतःकरणवृत्तिर्द्विविधा— साधारणा असाधारणा चेति । तत्रासाधारणा वृत्तिरुक्तेत्याह—स्वालक्षण्यमिति । स्वालक्षण्यं-महत्तत्त्वस्याध्यवसायः, अहंकारस्याभिमानः, मनसस्संकल्पश्च- स्वस्य स्वस्य पूर्वोक्ताः असाधारणवृत्तयः । तदेवाह-स्वालक्षण्यं पूर्वोक्त-स्वस्वलक्षणानीत्यर्थः । त्रयस्य - बुद्ध्यहंकारमनसां त्रयस्य - वृत्तिः व्यापारः । सैषा वृत्ति असामान्या असाधारणा भवति । सामान्य-करणवृत्तिः - अंतःकरणत्रयस्य सामान्यवृत्तिस्तु । प्राणाद्याः प्राणापान-

व्यानोदानसमानाख्याः पञ्च वायवः जीवनहेतवः। "हृदि प्राणो गुदेऽपानस्समानो नाभिसंस्थितः। उदानः कण्ठदेशस्थो व्यानस्सर्व-शरीरगः ॥" इति। अंतःकरणत्रयस्य अन्वयव्यतिरेकाभ्यामनुगतत्वात् पंच वायवः तद्व्यापार इति भावः। २९

बुद्ध्यादींद्रियांतानां चतुर्णां वृत्तिः युगपद्वा क्रमेण वा भवतीत्याह :—

**युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा।**
**दृष्टे तथाऽप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः॥ ३०**

युगपदित्यादि :—दृष्टे प्रत्यक्ष वस्तुनि - तस्य पूर्वोक्तस्य तु चतुष्टयस्य- इंद्रियाणां- मनसः, अहंकारस्य, बुद्धेश्च- वृत्तिः युगपद्भवति कदाचित्। कदाचित् क्रमशश्च आलोचनादिक्रमेण च निर्दिष्टा। यथा गाढांधकारे अभिमुखमागच्छन्तं व्याघ्रं विद्युदुन्मेषमात्रात् क्रमं विना युगपदेव पश्यति विवेचयति अभिमनुते अध्यवस्यति च अयं मां हंतुमागत इति- तत्क्षण एव उत्प्लुत्य अपसरति च-तथा युगपत् इंद्रियमनोहंकारबुद्धीनां वृत्त्युद्भव इति ज्ञेयम्। क्रमेण यथा मन्दांधकारे स्वाभिमुखमागच्छन्तं व्याघ्रं इंद्रियेण चक्षुषा प्रथमं पश्यति - अनंतरं मनसा आलोचयति व्याघ्रोऽयमागच्छतीति - ततः अहंकारेण मां प्रत्यायातीत्यभिमनुते - ततो बुद्ध्या निश्चिनोति अपसरामीति - ततः अपसरति - सोऽयं वृत्तीनां क्रमप्रकारः। एतद् द्वयं दृष्टे विषये प्रत्यक्षे। यथा दृष्टे तथा अदृष्टेऽपि त्रयस्य

बुद्धिमनोऽहंकाररूपांतःकरणत्रयस्य वृत्तिः युगपद्वा क्रमेण वा भवति। अदृष्टे अप्रत्यक्षे–अनुमानागमस्मृतिविषये वस्तुनीत्यर्थः। तत्र बाह्येन्द्रियव्यापाराभावात् त्रयाणामेव युगपत्क्रमेण वा वृत्तिरुक्ता। परं तु-बाह्येन्द्रियव्यापाराभावेऽपि। तत्पूर्विकैवेति–दृष्टपूर्विकैवेति अङ्गीकर्तव्येत्यर्थः। अनुमानस्य दृष्टलिंगसापेक्षत्वात् आगमविषयस्य वस्तुनः आप्तदृष्टत्वात् स्मृतेरनुभवपूर्वकत्वाच्च सा वृत्तिः दृष्टपूर्विकैवेति भावः।३०

ननु अस्य करणस्य इयमेव वृत्तिरिति नियमहेतोरभावात् बुद्ध्यादीनां वृत्तिसंकरप्रसङ्गः स्यादितीत्यत आह :—

**स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिं।**
**पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम्।। ३१**

स्वां स्वामित्यादि :– करणानि बुद्धिमनोहंकारेन्द्रियरूपाणि त्रयोदश करणानि। स्वां स्वां परस्पराकूतहेतुकां वृत्तिं प्रतिपद्यंते। यथा आखेटाय प्रवृत्ताः निषादादयः वने व्याघ्रादिव्यापादनाय तत्तद्गुप्तिस्थानेषु स्थिताः स्वस्वाभ्यस्तबाणमुसलाद्यायुधधारिणः व्याघ्रादिद्रष्टुः कस्यचिदाकूतमवगम्य सर्वे व्यापादनाय प्रवर्तंते स्वैस्स्वैरायुधैः—नायुधसंकरं भजंते – तथा करणानां मध्ये अन्यतमस्य करणस्य स्वकार्यकरणाऽऽभिमुख्यरूपादाकूतात्सर्वाण्यपीतराणि करणानि स्वस्वप्रतिनियतव्यापाराभिमुखा भवंतीति न वृत्तिसांकर्यप्रसंगः। निषादादीनां चेतनत्वात् ते परस्पराकूतग्रहणसमर्थाः। करणानान्त्वचेतनत्वात् तानि नैवंविधानीत्यतः करणानामाधिष्ठाता

केनचित् चेतनेन भवितव्यमित्यत आह-पुरुषार्थ एव हेतुः। न केनचित् कार्यते करणमिति। पुरुषस्य अर्थः भोगापवर्गलक्षण एव करणप्रवृत्तौ हेतुः। नान्यः कश्चन चेतनः प्रवर्तक इति भावः। एतत् वत्सविवृद्ध्यर्थमित्यत्र सम्यक्प्रतिपादयिष्यते। ६१

करणं विभज्य तद्व्यापारान् वक्तुमुपक्रमते :–

**करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्।**
**कार्यं च तस्य दशधा हार्यं धार्यं प्रकाश्यं च॥ ३२**

करणमित्यादि :— करणं ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पंच मनोऽहंकारबुद्धय इति त्रयोदशविधम्। तत् त्रयोदशविधं करणं आहरणधारणप्रकाशकरं। तत्र कर्मेन्द्रियाणि स्वविषयान् वचनादीनाहरंतीति आहरणं कर्मेन्द्रियव्यापारः बुद्ध्यहंकारमनांसि स्वसाधारणवृत्त्या प्राणादिरूपया धारयंति देहादिकमिति धारणं अंतःकरणस्य व्यापारः। ज्ञानेन्द्रियाणि प्रकाशयंति शब्दादीनिति प्रकाशनं ज्ञानेन्द्रियाणां व्यापारः। करणकार्यआहार्य - धार्य - प्रकाश्यं - च कतिविधमित्यत आह – तस्य त्रयोदशविधस्य करणस्य कार्यं प्रत्येकं दशधा। अयं भावः–कर्मेन्द्रियैराहार्यं वचनादानगमनोत्सर्गानंदात्मकं पञ्चकं द्विविधम् – दिव्यमदिव्यं चेति। तत्र दिव्यं देवतादिसम्बन्धि—अदिव्यं मानुषादिसम्बन्धि। एवं दशविधमाहार्यम्। अंतःकरणेन त्रिविधेन प्राणादिवृत्त्या धार्यस्य शरीरस्य पाञ्चभौतिकतया शारीराणि पंच भूतानि द्विविधानि

दिव्यान्यदिव्यानि चेति। एवं धार्यमपि दशविधम्। ज्ञानेन्द्रिय-प्रकाश्यानां शब्दादीनां पञ्चानामपि दिव्यादिव्यतया द्विविधत्वा-त्प्रकाश्यमपि दशविधम्। एवं प्रत्येकं दशविधमिति भावः। ३२

अधुना त्रयोदशविधं करणं पुनः द्विधा विभज्यते। तयो-रवांतरविभागं करोति :—

अंतःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्।
सांप्रतकालं बाह्यं त्रिकालमाभ्यंतरं करणम् ॥ ३३

अंतःकरणमित्यादि :—करणं द्विविधम् अंतःकरणं बहिःकरणं चेति। तत्र अंतःकरणं त्रिविधम् बुद्ध्यहंकारमनोभेदात्। बाह्यं करणं दशधा - ज्ञानेन्द्रियकर्मेन्द्रियभेदात्। एतद्बाह्यं करणं त्रयस्य अंतःकरणस्य। विषयाख्यं विषयं आख्यातीति विषयाख्यम्। विषयं शब्दादिकमाहृत्य ददातीत्यर्थः। तद्दत्तं विषयं मन आलोचयति-अहंकारः अभिमनुते—बुद्धिरध्यवस्यतीत्यर्थः। अंतर्बहिःकरणयोः विशेषमाह—सांप्रतकालं बाह्यमिति। बाह्यं करणं सांप्रतकालं वर्तमान-कालं। अत्र वर्तमानशब्देन वर्तमानसमीपस्थं अतीतमनागतमपि लक्ष्यते वर्तमानमेव विषयं गृह्णातीत्यर्थः। आभ्यंतरं करणं तु त्रिकालं कालत्रयविषयं गृह्णातीत्यर्थः। यथा — नदीपूरं दृष्ट्वा दूरे वृष्टिर-भूदिति ज्ञायते। धूमं पर्वते दृष्ट्वा वर्तमानं वह्निमनुमिनोति। सांडां पिपीलिकापंक्तिं दृष्ट्वा वृष्टिर्भविष्यतीति जानाति। एवं आभ्यंतरं करणं त्रिकालं। ननु कालस्य अतीतादिव्यवहारहेतोः वैशेषिका-

दिभिरङ्गीकृतत्वात् तत्वेषु गणना किमर्थं न कृतेति चेत् उच्यते- अतीतादिव्यवहारे न कालो हेतुः। किंतु यैर्विषयैरतीतादिव्यवहारे जायते ते विषया एव व्यवहारहेतवः। किं कालेनेति तस्य तत्वेषु गणना न कृता सांख्याचार्यैरिति भावः। ३३

अथ बाह्येन्द्रियाणां विषयान् शब्दादीन् विशेषतो विविच्य निरूपयति :—

**बुद्धीन्द्रियाणि तेषां पंच विशेषा विशेषविषयाणि ।**
**वाग्भवति शब्दविषया शेषाणि तु पंच विषयाणि ॥ ३४**

बुद्धीति :— शब्दादयो विषयाः द्विविधाः-स्थूलास्सूक्ष्मा श्चेति। तत्र स्थूलाश्शब्दादयएव भूतानीति विशेषा इति कथ्यन्ते। सूक्ष्मास्तन्मात्राणीत्युच्यन्ते। तेषां करणानां मध्ये बुद्धीन्द्रियाणि पञ्च श्रोत्रादीनि विशेषा विशेषविषयाणि भूततन्मात्र- विषयाणीत्यर्थः। योगिनां श्रोत्रादीनि तन्मात्रविषयाणि स्थूल- शब्दादिभूतविषयाणि च भवन्ति। कर्मेंद्रियेषु च वाक् शब्द- विषया भवति। स्थूलशब्दविषयैव भवति। स्थूलशब्दोच्चारणहेतुत्वात सूक्ष्मशब्दहेतुत्वं तु अहंकारस्यैव। शेषाणि पाणिपादपायूपस्थानि पञ्च विषयाणि स्थूलशब्दादिरूपपञ्चभूतात्मकघटादिविषयत्वात् पञ्च- विषयत्वम्। ३४

अथ त्रयोदशकरणेषु गुणप्रधानभावमाह :—

**सांतःकरणा बुद्धिस्सर्वं विषयमवगाहते यस्मात् ।**
**तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५**

सांतःकरणेत्यादि :--यस्मात्सांतःकरणामनोऽहंकारयुक्ता बुद्धिः-सर्वं बाह्येंद्रियोपनीतं विषयमवगाहते अध्यवस्यति । तस्मात् त्रिविधं बुद्धिमनोऽहंकारात्मकं करणं अंतःकरणं द्वारि प्रधानम् । शेषाणि बाह्येंद्रियाणि दश । द्वाराणि विषयग्रहणे द्वारभूतानि गौणानीत्यर्थः । अंतःकरणत्रयं बाह्येंद्रियद्वारा विषयजातं गृह्णातीत्यर्थः । ३५

अधुना बुद्धेरहंकारादिसर्वप्राधान्यमाह :-

**एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।**
**कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छंति ॥ ३६**

एते इत्यादि :- गुणविशेषाः सत्वरजस्तमोगुणविकारभूताः एते अहंकारमनोबाह्येंद्रियरूपाणि द्वादश करणानीत्यर्थः । परस्पर-विलक्षणाः परस्परविरुद्धाअपि प्रदीपकल्पाः । यथा परस्परविरुद्धा-अपि वर्तितैलवह्नयः परस्परं मिलिताः दीपतां प्राप्य रूपं प्रकाशयन्ति एवमेते मिलिताः पुरुषस्य कृत्स्नं अर्थं भोगाप-वर्गात्मकं प्रकाश्य बुद्धौ प्रयच्छन्ति समर्पयन्ति। बाह्येंद्रियाणि सर्वम् विषयं प्रकाश्य मनसि समर्पयंति। मनः अहंकारे। अहं-कारश्च बुद्धौ सर्वाध्यक्षायां समर्पयति। अधिकृताः कृषीवलेभ्यः करमादाय स्वोत्तरोत्तराधिकृतद्वारेण राज्ञीवेति भावः । ३६

बुद्धेस्सर्वप्राधान्ये हेतुमाह :-

**सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः ।**
**सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७**

सर्वमित्यादि :—अधिकृतेषु सर्वेषु मंत्री राजसन्निधानात् सर्वं तदीयं अधिकारं प्राप्य राज्ञे सर्वमुपभोगं यथा साधयति तथा। यस्माद्बुद्धिः पुरुषस्य साक्षात्साधनं तस्मादिति शेषः बुद्धिः पुरुषसन्निधानात् चिच्छायापत्त्या चिद्रूपैव। पुरुषस्य सर्वं शब्दादिकं प्रति उपभोगं इंद्रियाद्युपनीतविषयजन्यसुखादिकमुपभोगं साधयति संपादयति। तस्मात् सर्वेभ्योऽधिकृतेभ्यः मंत्रिणइव बुद्धेरेव प्राधान्यमिति भावः। तथा चेत्पुरुषस्य अनिर्मोक्षप्रसंग इत्यत आह। सैव च- बुद्धिरेव पुनः सूक्ष्मं दुर्ग्रहं प्रधानपुरुषान्तरं प्रकृतिपुरुषान्यथाख्यातिं च कैवल्यहेतुकां विशिनष्टि करोतीत्यर्थः। ततो बुद्धिरेव पुरुषस्य भोगमोक्षहेतुरिति भावः। ३७

एवं करणानां स्वरूपं सविशेषमुक्त्वा तन्मात्र-भूतस्वरूपमाह :—

तन्मात्राण्यविशेषास्तेभ्यो भूतानि पंच पंचभ्यः।
एते स्मृता विशेषाश्शांता घोराश्च मूढाश्च॥ ३८

तन्मात्राणीत्यादि :-तन्मात्राणि-शब्दादीनि- अविशेषात्सूक्ष्माणि। अतस्तेषां शांतादिरस्तीति भावः। तेभ्यः पञ्चभ्यस्तन्मात्रेभ्यः पंच भूतानि स्थूलशब्दाद्यात्मकानि भवंति। तत्राकाशः शब्दगुणः। वायुः शब्दस्पर्शगुणः। अग्निः शब्दस्पर्शरूपगुणः। जलं शब्द-स्पर्शरूपरसगुणम्। पृथिवी शब्दस्पर्शरूपरसगंधगुणा च-एते भूतानीत्यर्थः। विशेषाः स्थूला इति स्मृताः। स्थूलत्वे हेतुमाह-शांताः सत्व-प्रधानाश्शब्दादयश्शांताः सुखहेतवः। घोराः रजःप्रधानाः दुःखहेतवः।

मूढाश्च तमःप्रधानाः विषादयः मोहादिहेतवः। अतः स्थूलाः शब्दादिगुणवत्-तदाश्रयाः पृथिव्यादयोऽपि शांतादिभेदभिन्ना इति भावः। ३८

अथ विशेषाणां मध्ये अवांतरभेदमाह :-

**सूक्ष्मा मातापितृजास्सह प्रभूतैस्त्रिधा विशेषास्स्युः।**
**सूक्ष्मास्तेषां नियता मातापितृजा निवर्तंते ॥ ३९**

सूक्ष्मा इत्यादि :- विशेषाः सूक्ष्माः प्रकृतिपरिकल्पिताः। सूक्ष्मदेहा इति-मातापितृजाः स्थूलदेहा इति - प्रकृष्टैः भूतैः स्थूलदेहोपचयहेतुभिः महाभूतैस्सह त्रिधा स्युः। स्थूलदेहे च मातृतो लोमलोहितमांसानि पितृतः स्नाय्वस्थिमज्जान इति षाट्कौशिकं स्थूलं शरीरं मातापितृजं। घटादीनामुपभोगहेतूनां महाभूतेष्वंतर्भावः। तेषु त्रिविधेषु विशेषेषु विशेषमाह। तेषां त्रिविधविशेषाणां मध्ये सूक्ष्मा नियताः। कैवल्यपर्यंतमिति शेषः। मातापितृजा निवर्तंते जायंते म्रियंते च। महाभूतानि च प्रलयांतानीति परिशेषाज्ज्ञेयम्। तानि च अनुक्षणं उत्पद्यन्ते विलीयंते चेति भावः। ३९

अथ सूक्ष्मशरीरस्वरूपं निरूपयति :—

**पूर्वोत्पन्नमसक्तं नियतं महदादि सूक्ष्मपर्यन्तं।**
**संसरति निरुपभोगं भावैरधिवासितं लिंगम् ॥ ४०**

पूर्वोत्पन्नमित्यादि :—पूर्वोत्पन्नं-आदिसर्गे एकैकस्य पुरुषस्य एकैकं प्रधानेनोत्पादितं। असक्तं शिलादिष्वपि अव्याहतसंचारं।

नियतं आदिसर्गमारभ्य महाप्रलयपर्यन्तं नियमेन वर्तमानं। एवं-स्वभावं महदादि सूक्ष्मपर्यन्तं महदहंकारैकादशेंद्रियपंचतन्मात्रपर्यन्ता-ष्टादशतत्वात्मकं सूक्ष्मं शरीरमित्यर्थः। एतच्च सूक्ष्मशरीरं तन्मात्रांशेन अविशेषविशेष एव। शांतत्वेऽपि घोरमूढस्वभावैरिंद्रियैरन्वितत्वादित्यर्थः। निरुपभोगं भोगायतनं स्थूलशरीरं विना उपभोगरहितं यतः। तस्मात्कारणात् संसरति-पूर्वं पूर्वं षाट्कौशिकं स्थूलशरीरं जहाति नूतनं नूतनमुपादत्ते च। अतो न सूक्ष्मशरीरं भोगायतनम्। किंतु स्थूलशरीरमेव। तद्द्वारेणैव संसरतीति भावः। तत्सूक्ष्मशरीरं कथं संसरतीत्यत आह-भावैरधिवासितं। यतो भावैः धर्माधर्मज्ञानाज्ञान-वैराग्यावैराग्यैश्वर्यानैश्वर्यैः पूर्वोक्तैः बुद्धिधर्मैः अधिवासितं अन्वितं ततः संसरतीति भावः। यद्यपि बुद्धिधर्मा एते-तथाऽपि सूक्ष्म-शरीरस्य बुद्धिप्रधानत्वात् सूक्ष्मशरीरधर्मत्वं। लिंगं- लयं गच्छतीति-लिंगम्। महाप्रलये प्रधाने लीनं भवति पुनस्सर्गादौ आविर्भवतीति भावः। प्रधानं तु महाप्रलयेऽपि तिष्ठती पुरुषसत्वे लिंगत्वाल्लिंगमिति वा। ४०

ननु साहंकारेंद्रिया बुद्धिरेव संसरतु। किं तन्मात्ररूपेण सूक्ष्मशरीरेणेत्यत आह :—

**चित्रं यथा श्रयमृते स्थाण्वादिभ्यो विना यथाच्छाया।**
**तद्वद्विनाऽविशेषैर्न तिष्ठति निराश्रयं लिंगम्॥ ४१**

चित्रमित्यादि :–यथा आश्रयमृते आश्रयं भित्त्यादिकं विना चित्रं न तिष्ठति; छाया यथा स्थाण्वादिभ्यो विना न तिष्ठति-तद्वत् लिंग महाऽहंकारेंद्रियात्मकं लिंगं अविशेषैस्तन्मात्रैर्विना-सूक्ष्म-शरीरेण विनेत्यर्थः। निराश्रयं न तिष्ठति। पंचतन्मात्राश्रितमेव तिष्ठतीत्यर्थः। पंचतन्मात्रात्मकस्य सूक्ष्मशरीरस्य पुरुष इति च व्यवहा-रोऽस्ति श्रुतिषु 'अंगुष्ठमात्रः पुरुष' इति। तत्र पुरि स्थूलशरीरे शयनात् पुरुष इत्यन्वर्थसंज्ञा सूक्ष्मशरीरस्य। ४१

एवं सूक्ष्मशरीरं सविशेषमुपपाद्य अधुना तस्य संसार-प्रकारमाह :—

**पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसंगेन।**
**प्रकृतेर्विभुत्वयोगान्नटवद् व्यवतिष्ठते लिंगम्॥** ४२

पुरुषेत्यादि :– पुरुषस्य अर्थः भोगापवर्गरूपो हेतुः यस्य तत्। न तु स्वस्य कोप्यर्थोऽस्तीति भावः! इदं लिंगं सूक्ष्मशरीरनिमित्तम्-धर्माधर्मादयो भावाः - नैमित्तिकं स्वर्गादिलोकेषु शरीरपरिग्रहः - तयोः प्रसंगेनं। नटवत् व्यवतिष्ठते संसरतीत्यर्थः। यथा नटः एकैकां भूमिकां परिगृह्य पुनस्तां तां भूमिकां विहाय अन्यामन्यां भूमिकां परिगृह्णाति तथा सूक्ष्मशरीरमपि पुरुषस्य भोगापवर्गार्थं तत्तल्लोकेषु देवादिशरीरं परिगृह्य पुनस्तत्तच्छरीरं षाट्कौशिकं त्यक्त्वा अन्यदन्यच्छरीरं परिगृह्य संसरतीति भावः। सूक्ष्मशरीर-

स्यैतादृशो महिमा कथमित्यत आह-प्रकृतेर्विभुत्वयोगादिति। प्रधानस्य महिमाऽत्यद्भुतः। तद्वशात्संसरतीति भावः। ४२

अथ निमित्तनैमित्तिकस्वरूपं सविभागं निरूपयति :—

**सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्माद्याः।**
**दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कलिलाद्याः॥ ४३**

**सांसिद्धिका** इत्यादि :- भावाः धर्माद्याः द्विविधाः। सांसिद्धिका असांसिद्धिकाश्चेति। चकारेण असांसिद्धिकपरिग्रहः। तत्र सांसिद्धिकाः प्राकृतिकाः। कल्पादौ कपिले महासिद्धे स्वभावतएव प्रवृत्ताः- धर्मज्ञानवैराग्यैश्वर्याख्याः स्वाभाविकाः भावाः- सांसिद्धिका इति यावत्। असांसिद्धिकाश्च वैकृताः उपायानुष्ठानसाध्याः यथा वाल्मीकिप्रभृतीनां धर्मादयः। अधर्माज्ञानावैराग्यानैश्वर्याख्या - अपि द्विविधाः। तत्र रक्षःप्रभृतीनां अधर्माद्याः सांसिद्धिकाः- दैत्यदानवादीनां असांसिद्धिकाः उपायसाध्याः। यथा हिरण्यकशिपु-प्रभृतीनां। ते च सर्वे धर्माधर्माद्याः करणाश्रयिणो बुद्ध्याद्याश्रयिणो दृष्टाः। कलिलाद्याः धर्माधर्मादिफलभूताः कार्याश्रयिणो दृष्टाः। गर्भस्थस्य कलिलबुद्बुदाद्याः जातस्य बाल्ययौवनाद्या इत्यर्थः। ४३

एवं धर्मादीनां निमित्तानां कलिलादीनां नैमित्तिकानां स्वरूपमुक्तं। तत्र केन निमित्तेन धर्मादिना किं नैमित्तिकं जायत इत्यत आह :—

धर्मेण गमनमूर्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बंधः ॥ ४४

धर्मेणेत्यादि :— धर्मेण ऊर्ध्वं स्वर्गादिलोकेषु गमनं भवति । अधर्मेण अधस्तात् अतलाद्यधोलोकेषु स्थावरांतेषु च गमनं भवति । ज्ञानेन प्रकृतिपुरुषान्यथाख्यातिलक्षणेन अपवर्गः कैवल्यं भवति । विपर्ययात् तस्याऽज्ञानादित्यर्थः । बंधः इष्यते भवतीति यावत् । बंधश्च त्रिविधः प्राकृतिको वैकृतिको दाक्षिणश्चेति । तत्र पुरुषस्वरूपाज्ञानेन प्रकृतिमेव पुरुषबुद्ध्या य उपासते तस्य प्राकृतिको बंधः । 'पूर्णं शतसहस्रं तु तिष्ठंत्यव्यक्तचिंतकाः' इति । प्रकृतौ तिष्ठंतीति भावः । विकारान् बुद्ध्यहंकारादीन् पुरुषबुद्ध्या य-उपासते तस्य सम्बन्धो वैकारिकः । "बौद्धा दशसहस्राणि तिष्ठंति विगतज्वराः" इत्यादि । बुद्ध्यादाविति भावः । इष्टा पूर्तादिना दक्षिणमार्गगमनं दाक्षिणो बंधः । एवं बंधस्त्रिविधः । ४४

वैराग्यात्प्रकृतिलयः संसारो भवति राजसाद्रागात् ।
ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यासः ॥ ४५

वैराग्यादित्यादि :— पूर्वमवैराग्यपूर्वकं प्रकृत्यादीनुपासतां बंध उक्तः । अधुना वैराग्यात् पुरुषस्वरूपाज्ञानेन वैराग्यपूर्वकं प्रकृत्यादीन् पुरुषबुद्ध्या उपासतां प्रकृतिलयः प्रकृत्यादिषु लयः । अत्र वर्षनियमं विना आकल्पं प्रकृत्यादिषु लय इत्यर्थः । राजसात्

दुःखरूपात् रागात् संसारो दुःखरूपो भवति। ऐश्वर्यादविघातः इच्छाया इति शेषः। यद्यदिच्छति तत्तत्सिध्यतीत्यर्थः। विपर्ययात् अनैश्वर्यात्। तस्य अविघातस्य विपर्यासः विघात इत्यर्थः। यद्य-दिच्छति न तत्सिद्ध्यतीत्यर्थः। ४५

एवं बुद्धिधर्मेषु धर्मादिषु हेयान् उपादेयांश्च निरूपयितुं तेषां धर्माणां समासव्यासाभ्यां स्वरूपं निरूपयति :-

**एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्याः।**
**गुणवैषम्यविमर्दात्तस्य च भेदास्तु पंचाशत् ॥ ४६**

एष इत्यादि :— एषः पूर्वोक्तः प्रत्ययस्य बुद्धेस्सर्गः। सः विपर्ययाशक्तितुष्टिसिद्ध्याख्यः विपर्ययादिभेदेन चतुर्विधः। तत्र विपर्ययः अविद्या। अशक्तिः करणवैकल्यादिका। तुष्टिसिद्धी वक्ष्यमाणे। एते सर्वेऽपि साक्षात्परंपरया वा बुद्धिधर्मा एव। ज्ञानातिरिक्तानां सप्तानां धर्मादीनां विपर्ययाशक्तितुष्टिषु यथायथ-मन्तर्भावः। ज्ञानस्य तु सिद्धावन्तर्भावः। एवं समासतः स्वरूपमुक्त्वा व्यासतस्तद्विभागं स्वरूपञ्चाह। तस्य च - प्रत्ययसर्गस्य-भेदास्तु। गुणवैषम्यविमर्दात् गुणानां न्यूनाधिकभावप्रयुक्तपरस्पराभिभवात्। पञ्चाशत् भवंतीति शेषः। ४६

अथ ते पंचाशद्भेदाः विपर्ययादीनां कस्य कस्य-कति कती-त्यत आह :—

**पंच विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।**
**अष्टाविंशतिभेदा तुष्टिर्नवधाऽष्टधा सिद्धिः ॥ ४७**

पंचेत्यादि :— विपर्ययस्य भेदाः पंच । अविद्याऽस्मितारागद्वेषाभिनिवेशाः । तमो मोहो महामोहस्तामिस्रमंधतामिस्रमित्यपि क्वचित् क्रमात्तेषां नामोक्तम् । विपर्ययजन्यानामस्मितादीनामपि विपर्यय शब्देन निर्देशः । भवंतीति योजना । करणानामिंद्रियादीनां वैकल्यात् अशक्तिश्च । अष्टाविंशतिभेदा । तुष्टिर्नवधा । सिद्धिरष्टधा । एवं पंचाशद्भेदा भवंतीत्यर्थः । ४७

अथ पंचानां विपर्ययभेदानामवांतरभेदानाह :--

**भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।**
**तामिस्रोऽष्टादशधा तथा भवत्यंधतामिस्रः ॥ ४८**

भेद इत्यादि :- तमसोऽविद्याया अष्टविधो भेदः । प्रकृतिमहदहंकारतन्मात्रेषु अनात्मसु आत्मबुद्धिरविद्या । प्रकृत्यादीनामष्टविधत्वादविद्याचाष्टविधा । मोहस्य चेति चकारादष्टविधो भेद इत्यनुषज्यते । देवादीनां अविद्यया अणिमाद्यष्टैश्वर्येषु स्वीयेषु शाश्वतिकाभिमानो भवतीति अस्मिताख्यो मोहोऽपि अष्टविधः । महामोहः रागोऽपि दशविधः । शब्दादयो विषयाः पंच प्रत्येकं दिव्यादिव्यतया दशविधाः । तद्विषयत्वात् महामोहाख्यो रागोऽपि दशविधः । तामिस्रो द्वेषः अष्टादशधा भिन्नेति भावः । शब्दादीनुपजीव्य अणिमादयोऽनु-

भूयन्ते। ततो दिव्यादिव्यतया शब्दादिदशकं अणिमाद्यष्टविषयत्वात् तामिस्राख्यो द्वेषः अष्टादशविधः। परस्पराभिहत्या तेषु द्वेषो जायत इति भावः। अंधतामिस्रः अभिनिवेशोऽपि। तथा भवति अष्टादशविधो भवति। अभिनिवेशो नाम भयं। दिव्यादिव्यतया शब्दादयो दश अणिमादयश्च असुरादिभिरुपहन्यंत इति देवादीनां भयं भवति। तस्य अष्टादशविषयत्वात् अभिनिवेशः अष्टादशविधो भवति। एवं च संकल्य विपर्ययभेदाः द्विषष्टिसंख्याकाः। ४८

अथाशक्तेरष्टाविंशतिभेदानाह :--

एकादशेंद्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा।
सप्तदश वधा बुद्धेर्विपर्ययात् तुष्टिसिद्धीनाम्॥ ४९

एकादशेत्यादि :--इंद्रियाणां श्रोत्रादीनां वागादीनां ज्ञान-कर्मेंद्रियाणां मनसश्चेति एकादशानां वधाः वैकल्यरूपाः बाधिर्य-मूकत्वाद्याः। इंद्रियाणामेकादशत्वात् एकादश। तत्प्रयुक्ता बुद्धेरशक्तिः एकादशविधा। स्वीयैः सप्तदशभिः वधैस्सह अष्टादशविधा बुद्धेरशक्तिरुद्दिष्टा। ते च स्वीया बुद्धिवधाः के इत्यत्राह-नवविधानां तुष्टीनामष्टविधानां सिद्धीनां। विपर्ययात् विपर्यासात्। बुद्धिः स्वयं सप्तवधा। एवमष्टाविंशतिविधा अशक्तिरिति भावः। ४९

अथ नवविधां तुष्टिं निरूपयति :--

आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभागाख्याः।
बाह्या विषयोपरमात्पंच च नव तुष्टयोऽभिहिताः॥ ५०

आध्यात्मिका इत्यादि :- आध्यात्मिकास्तुष्टयश्चतस्रः । ते च प्रकृत्युपादानकालभागाख्याः । प्रकृतिविविक्तात्मज्ञानमधिकृत्य प्रवृत्तत्वादाध्यात्मिका इत्युच्यन्ते । प्रकृतेर्विविक्तः आत्मेति निश्चयवतः प्रकृतिपुरुषान्यथाख्यातेरपि प्रकृतिपरिणामकत्वात् तां ख्यातिं प्रकृतिरेव करोति । किं ध्यानेनेत्यसदुपदेशात् या तुष्टिर्जायते सा प्रकृत्याख्या । तादृशनिश्चयवतएव केवला प्रकृतिः तां ख्यातिं न करोति । तथा सति प्रकृतेर्वैषम्यनैर्घृण्याभावेन सर्वेषामप्येकदैव कैवल्यं स्यात् । अतः प्रव्रज्यया सा ख्यातिस्स्यात् । किं ध्यानेनेत्यसदुपदेशात् या तुष्टिर्जायते सा उपादानाख्या । तादृशनिश्चयवत एव प्रव्रज्यापि न सद्यः ख्यातिं करोति । किंतु ध्यानं विनाऽपि कालपरिपाकवशात् । अतः कालनिरीक्षणं कर्तव्यम् । न कालविलम्बकृतोतापः कार्यः इत्यसदुपदेशात् या तुष्टिर्जायते सा कालाख्या । तादृशनिश्चयवत एव न कालात् न प्रव्रज्यादेः ख्यातिर्भवति । किंतु भाग्यवशाद्भवति । यथा मदालसाऽपत्यानामतिबाल्ये मातुरुपदेशमात्रादेव-इत्यसदुपदेशात् या तुष्टिर्जायते सा भाग्याख्या । एताः प्रकृत्याद्याः-स्सिद्धयः क्रमेण अम्भस्सलिल-ओघ वृष्टि-पद-संकेतेनापि कथ्यन्ते । एवमाध्यात्मिकास्तुष्टयश्चतस्रः । विषयेषु शब्दस्पर्शादिषु उपरमात् वैराग्यात । बाह्यास्तुष्टयः पंच विषयसमानसंख्याकाः । बाह्येषु पुरुषव्यतिरिक्तेषु प्रकृतिमहदहंकारादिषु आत्मज्ञानवतः पुरुषस्य वैराग्ये सति प्रवृत्तत्वात् बाह्याः । ते च विषयाणां आर्जने रक्षणे क्षये भोगे हिंसायां च दोषदर्शनेन जायन्ते । विषयार्जनं गज-

सेवादिना दोषदर्शनात् विषयार्जनादुपरमे या तुष्टिस्सैका । चोरादिभ्यस्तद्रक्षणे महतो दुःखस्य दर्शनात् तदुपरमे या तुष्टिस्सा द्वितीया । आयासेनार्जितं रक्षितं च धनं भुज्यमानं सत् क्षीयतइति क्षयरूपदोषदर्शनात्तदुपरमे या तुष्टिस्सा तृतीया । विषयाणां निरन्तरं भोगात्कामाः वृद्धिं गताः पुरुषं दुःखितं कुर्वतीति भोगेऽपि दोषदर्शनात् तदुपरमे या तुष्टिः सा चतुर्थी । अन्याननुपहत्य विषयार्जनं तदुपभोगश्च सम्भवतीति हिंसारूपदोषदर्शनात् तदुपरमे या तुष्टिः सा पंचमी । एतासामेव तुष्टीनां क्रमात् अपारं सुपारं पारावारं अनुत्तमांभः उत्तमांभ इति नामांतराणि संकेतितानि । एवं बाह्याः पंच आध्यात्मिकीभिः चतसृभिस्सह नव तुष्टयो भवंतीति भाव । ५०

अथ सिद्धीनां स्वरूपमाह : —

**ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयस्सुहृत्प्राप्तिः ।**
**दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ५१**

ऊहइत्यादि : — अत्र पाठक्रमादर्थक्रमो बलीयान् ग्राह्यः । प्रथमतः अध्ययनं - गुरुमुखात् यथाविधि अध्यात्मविद्यास्वरूपग्रहणं । ततः शब्दः- तेन अर्थग्रहणं लक्ष्यते । तदेव श्रवणं । ततः ऊहः- आगमाऽविरोधिना तर्केण गृहीतस्य अर्थस्य संशयनिरासपूर्वकं परीक्षणम् । तन्मननमित्युच्यते । ततः सुहृत्प्राप्तिः । मतस्यार्थस्य विश्वासजननार्थं संवादाय गुरुशिष्यसब्रह्मचारिणां प्राप्तिः सुहृ-

त्प्राप्तिः। तैस्सह संवादात् तत्त्वाऽर्थे विश्वासो जायते। ततो दानम्। एभिरुपायैः गृहीतस्य प्रकृतिपुरुषविवेकज्ञानस्य दानं शुद्धिः। स-च शुद्धिः आदरनैरन्तर्यदीर्घकालसेविताभ्यासपरिपाकात् निदिध्या-सरूपाद्ध्यानाद्भवति। ततस्तत्फलभूताः आध्यात्मिकाधिभौतिकाधि-दैविकदुःखविघातास्त्रयस्सिद्धयः। अत्र दुःखविघातास्त्रयो मुख्याः। अन्ये गौणाः। तत्राऽपि पूर्वपूर्वमुत्तरोत्तरस्य कारणम्। उत्तरोत्तरं पूर्वपूर्वस्य फलं। तत्राध्ययनं प्रथमत्वात्कारणमेव। न कदाऽपि फलं भवति। दुःखविघाताश्चरमत्वात् फलभूता एव। न कदाचित्कारणानि भवन्ति। इतरेतरकारणभूताः फलभूताश्च भवन्तीति विशेषः। एवं सिद्धयोऽष्टौ। तेषामेव क्रमेण-तारं, सुतारं, तारतारं, रम्यकं, सदामुदितं, प्रमोदः, मुदितः, मोदमानः इति नामानि संकेतितानि। अत्र केचित् अन्यथा व्याचक्षते - उपदेशं विना जन्मान्तरी-याभ्यासवशात् स्वयं तत्त्वस्य ऊहनमूहः। अन्यदीयात्सांख्यशास्त्रपाठात् तत्त्वज्ञानोत्पत्तिः सशब्दः। आचार्यमुखाच्छब्दतोऽर्थतश्च सांख्यशास्त्रा-ध्ययनात् या ज्ञानसिद्धिः सा ध्यानमित्युच्यते। स्वस्याध्ययनाभावेऽपि अधिगततत्त्वस्य सुहृदः प्राप्त्या या ज्ञानसिद्धिः सा सुहृत्प्राप्तिः। धनादिना आराधितात् ज्ञानिनस्सकाशात् या ज्ञानसिद्धिस्सा दानम्। दुःखविघातास्त्रयः उभयत्र समानाः। एवं तुष्टिसिद्धि-विपर्ययभूता बुद्धिविधास्सप्तदशेति पूर्वमेवोक्तम्। एतेषु विपर्यया-दिषु हेयानुपादेयांश्चाह-सिद्धेः पूर्वोऽङ्कुशस्त्रिविध इति। अत्राष्टविधा सिद्धिरुपादेयैव। सिद्धेः पूर्वस्त्रिविधः विपर्ययाशक्तितुष्टिरूपः अंकुशः

अंकुशतुल्यः। यथा गजानामकुंशो निवारकः तथा विपर्ययशक्ति- तुष्टयः सिद्धीनां निवारकाइति सिद्धिपरिपंथित्वात् ता हेया इति भावः। एवं भावसर्गस्सविशेषं निरूपितः। अथ तेनैव भावसर्गेण पुरुषस्य भोगापवर्गसिद्धेः किं प्रयोजनम् पंचतन्मात्रसृष्ट्येत्यत आह :—

न विना भावैर्लिंगं न विना लिंगेन भावनिर्वृत्तिः।
लिंगाख्यो भावाख्यस्तस्माद्द्विविधः प्रवर्तते सर्गः॥ ५२

नविनेत्यादि :—लिंगं पंचतन्मात्रकं लिंगशरीरं। एत- त्स्थूलशरीरस्याप्युपलक्षणम्। भावैः प्रत्ययैः। विना। न तिष्ठति लिंगस्य पुरुषार्थसाधनत्वं प्रात्ययसर्गं विना न सम्भवति। लिंगेन विना भावानां प्रत्ययानां निर्वृत्तिः निष्पत्तिः न सम्भवति प्रत्ययसर्गस्याऽपि पुरुषार्थसाधनत्वं लिंगं विना न सम्भवतीत्यर्थः तस्मात् लिंगाख्यः-भावाख्यः-एवं द्विविधः सर्गः पुरुषस्य भोगाप- वर्गार्थं प्रवर्तते। अयं भावः- पुरुषस्य भोगः भोग्यान् शब्दादीन् भोगायतनं शरीरं-द्वयं च विना न सम्भवति। स एव भोग भोगसाधनानि करणानि-तद्भावान् धर्मादींश्च - विना न सम्भवति पुरुषस्य विवेकख्यातिः तदुभयं विना न सम्भवतीति। अनादि रुभयविधस्सर्गः बीजांकुरन्यायेन प्रवर्तत इत्युपपन्नम्। कल्पादौ च पुरुषाणां भोग्यभोगायतनकरणभावरूपं सर्वमपि प्राचीनकल्पोत्पन्न भोग्यादिसंस्कारवशादुत्पद्यत इति नान्योन्याश्रयस्सम्भवतीति स-

सम्पद्यत इति भावः। ५२

सविशेषं प्रत्ययसर्गं सम्यक् निरूप्य तन्मात्रादिसर्गं विभज्य निरूपयति :—

**अष्टविकल्पो दैवस्तैर्यग्योन्यश्च पंचधा भवति ।**
**मानुष्यश्चैकविधस्समासतो भौतिकस्सर्गः ॥ ५३**

अष्टेत्यादिः- दैवः सर्गः। ब्राह्म्य-प्राजापत्य-ऐन्द्र-पैत्र-गांधर्व-यक्ष-राक्षस-पैशाचभेदात् अष्टविकल्पः। तैर्यग्योन्यश्च सर्गः - पशुमृगपक्षिसरीसृपस्थावरभेदेन पंचधा भवति। पदार्थानां स्थावरेष्वंतर्भावः। मानुष्यश्च सर्ग एकविधः। ब्राह्मणादिषु वर्णेषु भिन्नेष्वपि शरीरसंस्थानस्य एकविधत्वात् एकविधत्वमुक्तम्। एवं समासतः संक्षेपतः भौतिकसर्गः निरूपित इति शेषः। अत्र सर्गेषु सर्वत्र शरीरद्वयग्रहणं कर्तव्यम्। ५३

अस्य भौतिकसर्गस्य चैतन्यस्फूर्तितारतम्यात् स्थानस्थितितारतम्यं निरूपयति :—

**ऊर्ध्वं सत्वविशालस्तमोविशालश्च मूलतस्सर्गः ।**
**मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४**

ऊर्ध्वमित्यादि :— ऊर्ध्वं स्वर्गादिसत्यलोकांतः। सत्वविशालः- तारतम्येन सत्वबहुलः। मूलतः सर्गः अतलादि पातालांतः।

पश्वादिस्थावरांतश्च । तमोबहुलः । तारतम्येनेति अनुषज्यते । मध्यलोके सर्गः सप्तद्वीपसमुद्रसहितः भूलोकः रजोविशालः रजोबहुलः दुःखबहुल इत्यर्थः । एवं ब्रह्मादिस्तम्बपर्यन्तः सर्गः संगृहीतः । ५४

एतस्य सर्गस्य दुःखहेतुतां पुरुषस्य ज्ञानोपयोगिवैराग्याय समुपदिशति :–

**तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।**
**लिंगस्याऽविनिवृत्तेस्तस्माद्दुःखं स्वभावेन ।। ५५**

तत्रेत्यादि :—चेतनोऽपि पुरि लिंगे शयनात् पुरुषः लिंगशरीरसम्बन्धात् । लिंगस्य सूक्ष्मशरीरस्य अविनिवृत्तेः निवृत्त्यभावात् । अथवा आविनिवृत्तेः निवृत्तिपर्यन्तं । तत्र सर्गे ऊर्ध्वादिपूर्वोक्ते सर्गे । जरामरणकृतं दुःखं प्राप्नोत्येव । यद्यपि ऊर्ध्वसर्गे सुखबाहुल्यमस्त्येव । तथाऽपि तत्राऽपि जरामरणयोरपरिहार्यत्वात् तत्सुखं दुःखभूयिष्ठमेव । तस्मात् लिंगशरीरे आत्माभिमानात् दुःखं स्वभावेन, स्वभावसिद्धमेवानुभूयते । लिंगशरीरे आत्मत्वाभिमानपर्यंतत्वात् दुःखस्येति भावः । ५५

अथ सर्गस्य प्रकृतिरेव हेतुः । नेश्वरः - न निर्विशेषं ब्रह्मनाप्यकारणस्सर्ग इति प्रतिपादयति :–

**इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः ।**
**प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ।। ५६**

इति—पूर्वोक्तप्रकारेण महदादिविशेषभूतपर्यन्तः महत्तत्वादि-लोकत्रयांतः। एषस्सर्गः। प्रकृतिकृतः प्रकृत्यैव कृतः। अकारणत्वे सर्वदा सर्गो वा तदभावो वा स्यात् - शुक्तौ रजतवत् अविद्यया ब्रह्मण्यध्यस्तत्वे रजताध्यासस्य सत्यरजतज्ञानाधीनत्ववत् प्रपंचाध्यासस्याऽपि सत्यप्रपंचज्ञानाधीनत्वावश्यंभावात्। तेन सत्य-प्रपंचेन ब्रह्मणः सद्वितीयता अविद्याश्रयता च स्यात्। ब्रह्मपरिणामत्वे निर्विशेषस्य ब्रह्मणः परिणामासम्भवाच्च। ईश्वराधिष्ठितप्रकृतिकृतत्वे उदासीनस्य निर्व्यापारस्येश्वरस्य अधिष्ठातृत्वासम्भवाच्च। परिशेषात् प्रकृतिपरिणामएव सर्गं इति भावः। ननु प्रकृतिकृतत्वे प्रकृत्याः नित्यप्रवृत्तिशीलत्वात् संसारोऽपि पुरुषस्य नित्य एव स्यात्। तदा पुरुषस्यापवर्ग एव न स्यात् इत्यत आह—प्रतिपुरुषविमोक्षार्थं प्रत्येकं पुरुषान् मोचयितुमेव तस्याः प्रवृत्तिः। न केवलं भोगार्थं। सा नित्यप्रवृत्तापि यं पुरुषं मोचितवती तदर्थं न पुनः प्रवर्तत इति भावः। यथा स्वार्थे लोकस्यारम्भः-प्रयत्नः-तथा प्रकृतेः परार्थे एवारम्भः। न हि-तस्याः स्वार्थ एव नास्ति; अतः कस्यचित् मोक्षं च ददातीति भावः। ५६

प्रवृत्तेः चेतनधर्मत्वात्- अचेतनायाः प्रकृतेः तदसम्भवात्- चेतनानां पुरुषाणां प्रकृतिस्वरूपे अज्ञत्वात्- सर्वज्ञः कश्चित्प्रकृते-रधिष्ठाता ईश्वरः तत्र वृत्यर्थं अङ्गीकर्तव्य इत्यत आह :—

**वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।**
**पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥** ५७

वत्सेत्यादि :— अज्ञस्य अचेतनस्यापि क्षीरस्य वत्सविवृद्धिनिमित्तं यथा प्रवृत्तिः तथा अचेतनस्याऽपि प्रधानस्य पुरुषविमोक्षनिमित्तं भोगस्याऽपि संग्रहः— भोगापवर्गनिमित्तमित्यर्थः। प्रवृत्तिर्भविष्यति- स्वयमेव प्रधानं पुरुषार्थं प्रवर्तते। नेश्वराधिष्ठानापेक्षं। लोके चेतनस्य सर्वस्यापि प्रवृत्तिः स्वार्थं वा कारुण्येन वा भवति। अवाप्तसकलकामस्येश्वरस्य न हि स्वार्थं कश्चिदस्ति। सृष्टेः प्राक् जीवानां करणाद्यभावेन तत्कृतदुःखाभावात् कारुण्यमपि न सम्भवति। दुःखप्रहाणेच्छैव कारुण्यम्। किं च यदि करुणया ईश्वरस्सृजेत् तदा सर्वानेव जन्तून् सुखिनस्सृजेत्। न विचित्रान्। जन्तुकर्मणां वैचित्र्यात् ईश्वरः तथा सृजातीति चेत् तदा विचित्रनानाकर्मसहितं प्रधानमेव सृजतीति वक्तव्यम्। किमीश्वरेण प्रधानस्य तु अचेतनस्य प्रवृत्तौ न स्वार्थो न कारुण्यं वा हेतुः। तस्मान्नोक्तदोषावकाशः। 'प्रधानस्य प्रवृत्तेस्तु परार्थमात्रं प्रयोजनम्। इदमुपलक्षणम् - यथा नदीजलादिकं तरुफलादिकं च अचेतनमपि परार्थं प्रवर्तते - तथा प्रधानमपीति स्वयमेव प्रधाने प्रवतमाने पुरुषास्तत्र अनादिकर्मवासनावशात् सुखं वा दुःखं वा प्राप्नुवन्तीति प्रधानस्य न वैषम्यनैर्घृण्ये सम्भवत :- अचेतनत्वात्। नापि स्वार्थः ईश्वरांगीकारे ईश्वरस्य चेतनत्वात् तत्सम्भव इति नेश्वरकारणवाद समीचीनं इत्युपेक्ष्यम्।

५७

पूर्वम् स्वार्थ इव परार्थे आरम्भ इत्युक्तम्। तत्स्वरूपमाह :—

**औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः।**
**पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८**

औत्सुक्यं इच्छा-तन्निवृत्यर्थम् लोकः यथा क्रियासु प्रवर्तते। अभिलषितवस्तुप्राप्तौ तद्विषयकेच्छा निवर्तते। फलप्राप्त्यंताहीच्छा। अभिलषितवस्तुप्राप्तिरेव स्वार्थः। तदर्थं तत्साधनक्रियासु लोकः प्रवर्तते। तत्प्राप्तौ निवर्तते च। तद्वत् अव्यक्तम् पुरुषस्य विमोक्षार्थम् अपवर्गार्थम् प्रवर्तते। तत्प्राप्तौ निवर्तते च। तस्मात् यथा लोकः स्वार्थे प्रवर्तते-तथा प्रधानं परार्थे प्रवर्तते। इच्छाभावेन अचेतनस्य तस्य स्वार्थासंभवात्। ५८

पुरुषार्थम् प्रकृतेः प्रवृत्तिरस्तु। निवृतिस्तु नित्यप्रवृत्तिशीलायाः तस्याः कथं स्यादित्यत आह :—

**रंगस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।**
**पुरुषस्य तथाऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः॥ ५९**

रंगस्येत्यादि :—रंगशब्देन रंगस्था जना लक्ष्यन्ते। रंगस्य-रंगस्थानां पारिषदानां - नर्तकी स्वनृत्यं दर्शयित्वा यथा नृत्यात् निवर्तते तथा प्रकृतिः पुरुषस्य आत्मानं स्वनृत्यभूतं शब्दाद्यात्मना पुरुषाद्भेदेन च प्रकाश्य शब्दाद्यात्मना प्रथमं भोगं दत्वा तत-

स्ततः पुरुषाद्भिन्नं निजस्वरूपं दर्शयित्वा विनिवर्तते। तदर्थं स्वपरिणामं निवर्तयतीति भावः। ५९

पुरुषार्थम् प्रकृतिः प्रवर्तत इत्युक्तम्। लोके कोऽपि प्रत्युपकारं विना परार्थं न प्रवर्तते। अतः प्रधानमपि पुरुषात् प्रत्युपकारं लभते। स एव तस्य स्वार्थः। 'प्रयोजनमनुद्दिश्य न मंदोऽपि प्रवर्तत इति न्यायादित्यत आह :--

**नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः।**
**गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति॥ ६०**

नानाविधैरित्यादि :- नानाविधैः बहुविधैः उपायैः भोग्यनिष्पादनादिभिः। उपकारिणी गुणवती प्रकृतिः। अनुपकारिणः प्रत्युपकारमकुर्वतः। अगुणस्य निर्गुणस्य सतः पुंसः पुरुषस्य। तस्य। अर्थं भोगमोक्षरूपं। अपार्थकं प्रत्युपकारनिरपेक्षमेव। चरति आचरति। अयं भावः- लोके गुणवान् भृत्यः स्वगुणैः निर्गुणमनुपकारिणं पुरुषमाराध्य बहुधा अन्ते निष्फलाराधनो निवर्तते तद्वत् इयं सत्वादिगुणवती प्रकृतिरपि निर्गुणमनुपकारिणं पुरुषं स्वगुणैर्भोग्यतां स्वपरिणामेन गतैराराध्य प्रत्युपकारमनुपलभ्यैव निवर्तत-इति भावः। ६०

पूर्वं नर्तकीसाम्यमुक्तं प्रकृतेः। नर्तकी तु पारिषदेभ्यः स्वनृत्यं दर्शयित्वा निवृत्ताऽपि पुनस्तेषां कौतूहले जाते पुनस्तेभ्यः स्वनृत्यं दर्शयति। तद्वत् प्रकृतिरपि पुरुषाय स्वात्मानं प्रकाश्य

निवृत्तापि पुनस्तस्य कौतूहलमुपलभ्य पुनः प्रवर्ततामित्यत्र आह :—

**प्रकृतेस्सुकुमारतरं न किंचिदस्तीति मे मतिर्भवति ।**
**या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१**

प्रकृतेरित्यादि :— प्रकृतेः प्रधानात् । सुकुमारतरं अतिपेशलं परपुरुषदर्शनासहमिति यावत् । किंचिदपि वस्तु नास्तीति मे मतिर्भवति—इति शास्त्रकर्तुरभिप्रायः प्रकटितः । या प्रकृतिः विषयादि-रहिता केवला पुरुषेण दृष्टास्मीति हेतोः पुनस्तस्य पुरुषस्य दर्शनं नोपैति । यथा लोके असूर्यंपश्या कुलवधूः प्रमादाद्विगलितांबरा परपुरुषेण दृष्टा चेत् तदा सा एवं परपुरुषैः यथा न दृश्यते पुनस्तथा अप्रमत्ता भवति । एवं प्रकृतिरपि कुलवधूभ्योऽप्यधिका विवेकेन । न पुनः पुरुषेण दृश्यत इति भावः । पुरुषस्य पुनः कुतूहले जातेऽपि सा न दृष्टिगोचरं याति । पुरुषोऽपि कुतूहला-न्निवर्तत इति यावत् । ६१

नन्वगुणस्यापरिणामिनः पुरुषस्य बंधस्यैवाभावात् मोक्षोऽपि न सम्भवति । बद्धस्यैव हि मोक्षः । तस्मात् पुरुषविमोक्षार्थमित्यनुप-पन्नं वचः- इतीमां शंकामपनुदन्नुपसंहरति :—

**तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित् ।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२**

तस्मादित्यादि :- तस्मात् निर्गुणस्याऽपरिणामिनः बंधासम्भवात् कश्चिदपि पुरुषः न बध्यते - न मुच्यते - नाऽपि संसरति ।

अद्धा इत्याश्चर्ये । तर्हि कस्य बंधादय इत्यत आह नानाश्रया नाना-परिणामाश्रया सगुणा प्रकृतिरेव संसरति - बध्यते - मुच्यते च । भृत्यगतजयपराजयादयः राज्ञीव प्रकृतिगताः बंधमोक्षसंसाराः पुरुषेषूपचर्यन्ते । प्रकृतिगतानामपि तेषां विवेकाग्रहात्पुरुषसंबन्ध इति सर्वं रमणीयम् । ६२

कैस्साधनैः प्रकृतेर्बंधादय इत्यत आह :--

**रूपैस्सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।**
**सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३**

रूपैरित्यादि :- पूर्वमुक्ताः धर्माधर्मादयो भावाः । बुद्धेः । तत्र ज्ञानवर्जं सप्तभिरेव रूपैः । तुशब्दः धर्मादीन् ज्ञानाद्विविनक्ति । धर्माधर्माज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्यैः । प्रकृतिः आत्मना स्वयमेव आत्मानं बध्नाति । सैव प्रकृतिश्च पुरुषस्यार्थं भोगापवर्गं प्रति । आत्मना आत्मानं एकरूपेण ज्ञानेन प्रकृतिपुरुषान्यथाख्यातिलक्षणेन विमोचयति । पुनर्भोगापवर्गौ न करोतीत्यर्थः । ६३

ततः किमित्यत आह :–

**एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।**
**अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४**

एवमुक्तप्रकारेण । तत्त्वाभ्यासात् - तत्वं महदादितत्वविषयकं ज्ञानं लक्ष्यते । तस्याभ्यासात् । आदरनैरंतर्यदीर्घकालसेवितात् तत्व-

ज्ञानाभ्यासात्। ज्ञानं प्रकृतिपुरुषान्यतासाक्षात्कारलक्षणं ज्ञानमुत्पद्यते। यस्मादपवर्गो भवति तादृशमिति भावः।

ज्ञानस्य स्वरूपमाह :— नास्मि न मे नाहमिति। नास्मीति सर्वक्रियानिषेध उक्तः। अनेन अध्यवसायाभिमानसंकल्पालोचनाख्या आंतरक्रियाः बाह्यस्सर्वो व्यापारश्च निषिद्धो भवति। सर्वव्यापारा-भावादेव नाहं - न कर्तेति - कर्तृत्वनिषेध आत्मनि प्रदर्शितः। अकर्तृत्वादेव न मे कश्चिदहं स्वामी। स्वस्वामिभावस्य कर्तृत्व-निबंधनत्वात्। अथवा नापुरुषः अस्मि। अतो नाहं न कर्ता पुरुषस्य अकर्तृत्वलक्षणत्वात्। अकर्तृत्वात् न मे न स्वामीति। एतादृशज्ञानिनमपि यद्यज्ञातं तत्वं किंचिदस्ति तदज्ञानं पुनर्बध्ना-तीत्यत आहः- अपरिशेषं। एतस्मिन् साक्षात्कारे जाते न किंचित् ज्ञातव्यं परिशिष्यत इति भावः। अपरिशेषमिति ज्ञानविशेषणम्- एतादृशसाक्षात्काररूपं ज्ञानं न कदाचिद्विपर्येति। अतः अविपर्ययादि-त्युक्तम्। संशयादेरप्युपलक्षणमेतत्। संशयविपर्ययादिरहितत्वात् विशुद्धम्। संशयविपर्ययादय एव ज्ञानस्याविशुद्धयः। अनादि-मिथ्याज्ञानवासनावशात् पुनस्संसारप्रसंग इत्यत आह-केवलं प्रमाण-जनितमित्यर्थः। प्रमाणभूता बुद्धिः तत्वपक्षपाता। प्रमाणजनितस्य ज्ञानस्य न कदाचिन्मिथ्यात्वं भवतीति न पुनस्संसारप्रसंगः। मिथ्याज्ञाननिबंधनो हि संसारः। अतो न कदाचिद्बध्यत इति भावः। ६४

तादृशतत्वसाक्षात्कारेण किं सिध्यतीत्यत आह :—

तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्तां ।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितस्स्वच्छः ॥ ६५

तेनेत्यादिः- तेन प्रकृतिपुरुषान्यत्वलक्षणेन साक्षात्कारेण । निवृत्त-प्रसवां - पुरुषस्य भोगविवेकसाक्षात्कारयोः प्रसवः दानं प्रकृते-स्स्वाभाविको धर्मः । तयोः निर्विशेषप्रसवात् । पुरुषार्थे निवृत्त-प्रसवां । अर्थस्य विवेकसाक्षात्काररूपस्य वशात् सामर्थ्यात् । सप्तभ्यः रूपेभ्यः धर्माधर्माज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्येभ्यः भावेभ्यः अतत्वज्ञानपूर्वकेभ्यः विनिवृत्तां । अतत्त्वज्ञानस्य विनिवृत्तत्वात् इति भावः । प्रकृतिं ज्ञानमात्रस्वरूपां पुरुषः पश्यति । सर्वपरिणाममूलभूतां मूलप्रकृतिं पश्यतीत्यर्थः । तत्प्रभृति संसाराभावात् स्वच्छः रजस्तमोकलुषया बुद्ध्या असंभिन्नः । सत्वप्रधानया बुद्ध्या तदापि किंचित्सम्बन्धोस्त्येव । अन्यथा प्रकृतिदर्शनानुपपत्तेः । प्रेक्षकवदुदा-सीनः सन् । अवस्थितः निष्क्रियसन्नवतिष्ठते । अन्येभ्यः पुरुषेभ्यः-प्रकृत्या क्रियमाणस्य संसारस्य प्रेक्षकस्सन्नवतिष्ठते । मुक्तः पुरुषो न तत्र सज्जते । प्रकृतिश्चैतदर्थम् न परिणमते चेति यावत् । ६५

ननु प्रकृतिपुरुषयोस्संयोग एव संसारस्य हेतुरिति पूर्वमुक्तम् । अधुनाऽपि तादृशस्य संयोगस्य अनिवृत्तत्वात् पुनःपुनः संसारप्रसंग इत्यत आह:—

**दृष्टा मयेत्युपेक्षत एको दृष्टाहमित्युपरमत्यन्या ।**
**सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥ ६६**

दृष्टेत्यादिः — एकः उत्पन्नविवेकसाक्षात्कारः पुरुषः । नेतरे इत्यर्थः । प्रकृतिः संसारहेतुभूता मया दृष्टेति उपेक्षते- प्रकृतिपरिणामभूतान् शब्दादीन् उपेक्षते । नोपभोक्तुमर्हतीत्यर्थः । पूर्ववद्बुद्ध्युपरागाभावात् । अन्या प्रकृतिः कुलवधूतुल्या अहं विविक्ता पुरुषेण दृष्टेति उपरमति । परिणामादिति शेषः । बुद्धौ चिच्छवत्युपरंजनाभावात् मुक्तपुरुषार्थं न परिणमते । एवं द्वयोः- तयोः प्रकृतिपुरुषयोः संयोगे सत्यपि उपरागाभावात् सर्गस्य प्रयोजनं नास्ति ; सर्गप्रयोजनयोः भोगापवर्गयोः पर्याप्तत्वान्न पुनः उपरागकृतं प्रयोजनमस्तीति भावः । ६६

ननूत्पन्नतत्वसाक्षात्कारस्य सद्यस्त्र शरीरपातस्स्यात् । तथा न दृश्यते । अतः संचितानां आगामिनां च कर्मणामपरिपक्कानां सत्वात् तेषां भोगेन कर्माशयप्रहाणानन्तरमेवापवर्ग इति अपवर्ग- प्राप्तिः मनोरथमात्रमेवेत्यत आह :—

**सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ ।**
**तिष्ठति संस्कारवशाच्चक्रभ्रमिवद्धृतशरीरः ॥ ६७**

सम्यगित्यादि :— सम्यग्ज्ञानाधिगमात् अपरोक्षतया तत्व- साक्षात्कारोदयात् 'ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने' ति गीतावचनप्रामाण्यात् संचितानामागामिनां च कर्मणां दग्धबीजन्या-

येन प्ररोहाऽसमर्थत्वात्। ज्ञानवर्जं धर्मादीनां सप्तानां अकारणत्वप्राप्तौ। भावप्रधानो निर्देशः। संसारकारणत्वनिवृत्तेरित्यर्थः। उत्पन्नतत्वसाक्षात्कारोऽपि पुरुषः प्रारब्धस्य विमुक्तशरवदनुगमात् - संस्कारवशात् चक्रभ्रमिवत् - उपरतेऽपि कुलालव्यापारे वेगाख्यसंस्कारवशात् कुलालचक्रं भ्रमंस्तिष्ठति एवं-प्रारब्धवशात् तत्क्षयपर्यन्तं धृतशरीरस्तिष्ठति। 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ संपत्स्य' इति श्रुतेः। ६७

तर्हि कदास्य मोक्षो भविष्यतीत्यत आह :—

प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ।
ऐकांतिकमात्यंतिकमुभयं कैवल्यमाप्नोति॥ ६८

प्राप्ते इत्यादि :— अवशिष्टस्य तु प्रारब्धस्य उपभोगेन क्षये। शरीरभेदे शरीरस्य नाशे प्राप्ते सति पुरुषः। चरितार्थत्वा-त्तस्य पुरुषस्यार्थे कृतकृत्यत्वात्- आत्मानं प्रति प्रधानस्य विनिवृत्तौ परिणामनिवृत्तौ। ऐकान्तिकं नियतं आत्यतिकं विनाशरहितं-उभयंकैवल्यं। दुःखत्रयध्वंसं विदेहकैवल्यमित्यर्थः। आप्नोति। जीवन्मुक्तत्वदशायां तु विवेकसाक्षात्कारे जातेऽपि प्रारब्धवशात् दग्धपटन्यायेन दुःखत्रयानुवृत्तिरस्ति। विदेहमुक्तौ तु तद्गंधोऽपि नास्तीति भावः। ६८

एवं प्रमाणोपपादिते अर्थे अत्यंतश्रद्धोत्पादनाय कपिलादिमहर्षिसंप्रदायं विवृणोति :—

पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यंते यत्र भूतानाम् ।। ६९

पुरुषार्थेत्यादि :- इदं पूर्वोक्तं गुह्यं परमरहस्यं अनधिकारिणां दुर्बोधं । पुरुषार्थज्ञानं । पुरुषस्य अर्थः भोगापवर्गरूपः-तस्य ज्ञानं-अन्यथाख्यातिजनकं शास्त्रं परमर्षिणा आदिसिद्धेन कपिलेन समाख्यातम् । तत्र सर्वेषां सम्मतिमाह :- यत्र ज्ञाने यद्ज्ञानार्थमित्यर्थः । भूतानां स्थित्युत्पत्तिप्रलयाः चिंत्यंते विचार्यंते । वेदशास्त्रपुराणादिभिरिति शेषः। वेदेषु च 'यतो वा इमानि भूतानि जायंते" इत्यादिना 'जन्माद्यस्य यत' इत्यादिना व्यासेन च सृष्ट्यादिप्रतिपादिकाख्यायिकाभिः पुराणैश्च सृष्ट्यादयः प्रकृतिपुरुषान्यथाख्यात्यर्थमेव विचार्यंत इति भावः । वेदादिशास्त्राणि पुराणादीनि च अत्रैव पर्यवसन्नानीत्यर्थः । ६९

एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकंपया प्रददौ ।
आसुरिरपि पंचशिखाय तेन बहुलीकृतं तंत्रम् ।। ७०

एतदिति :- एतत् पवित्रं पावनम् । दुःखत्रयकृतपापापनोदकं । अग्र्यं श्रेष्ठम्-सर्वशास्त्रसारभूतमित्यर्थः । मुनिः कपिलः आसुरये स्वशिष्याय अनुकंपया प्रददौ । तेन पंचशिखेन महर्षिणा तंत्रं सांख्यशास्त्रं बहुलीकृतं । बहुधा आख्यायिकावादादिभिः प्रपंचितं विततीकृतमिति भावः । ७०

**शिष्यपरंपरयागतमीश्वरकृष्णेन चैतदार्याभिः ।**
**संक्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धांतम् ॥ ७१**

शिष्यपरंपरया आगतं एतत् शास्त्रं आर्यमतिना मंद-प्रज्ञानुजिघृक्षुणा ईश्वरकृष्णेन योगिना आर्याभिः सप्तत्या सिद्धांतं सम्यग्विज्ञाय संक्षिप्तं सिद्धान्ताविरोधेन- आख्यायिकावादादिविरहितं संक्षेपेण योजितमिति भावः । ७१

संक्षेपप्रकारमेवाह :–

**सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितंत्रस्य ।**
**आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥ ७२**

षष्टितंत्रस्य षष्टिपदार्थस्य । कृत्स्नस्य सर्वस्य शास्त्रस्य विषयाः ये अर्थास्सन्ति - ते सर्वे अर्थाः सप्तत्यां-अस्यां आर्यासप्तत्यां संतीति शेषः । अतः एतच्छास्त्रमेव - न प्रकरणमिति भावः । संक्षेपप्रकारमाह– अस्यां प्रतिपादिताः अर्थाः । आख्यायिकाविरहिताः । परवादविवर्जिताश्चापि । न प्रतिपाद्यविषयात्यक्ता इति भावः । तस्मादत्र सकलश्शास्त्रार्थः कथित इति निर्गलितोऽर्थः । अथ षष्टिपदार्थ-संग्रहः - एकत्वं अर्थवत्त्वं पारार्थ्यमिति त्रयः प्रकृतिगताः । अन्यत्वं अकर्तृत्वं बहुत्वमिति त्रयः पुरुषगताः । अस्तित्वं योगः वियोगश्चेति त्रयः उभयगताः । शेषवृत्तित्वमिति पदार्थः तन्मात्र-भूताश्रितः । एवं दश । पंच विपर्ययाः । अष्टाविंशत्यशक्तयः । नव तुष्टयः । अष्टौ सिद्धयः ।

एवं षष्टिपदार्थाः सांख्यशास्त्रोक्ताः । एवं तेषां षष्टिपदार्थानां निरूपणमत्र कृतमिति सर्वं रमणीयम् ।

पूर्वाचार्यानुसारेण व्याख्याताः सांख्यकारिकाः ।
रथश्चलति सन्मार्गे पूर्वक्षुण्णे यथा तथा ॥

कपिलादीन् गुरून् वाचस्पत्यंतान् प्रणमाम्यहम् ।
यैस्सर्वशास्त्रसर्वस्वं सांख्यशास्त्रं समुद्धृतम् ॥

तार्किकमृगाधिपश्रीमद्वेंकटरामशास्त्रिपौत्रस्य ।
रामस्वामिबुधात्मजवेंकटकृष्णाख्यशास्त्रिणः पुत्रः ॥

कुरुगण्ट्यन्वयवेंकटरमणो जग्रंथ सांख्यरमणीयां ।
मार्कंडेयस्य श्रीसीतारामस्य चापि यो ज्यायान् ॥

इति श्रीमत्कुरुगंटिवेंकटरमणशास्त्रिविरचिता सांख्यरमणीयाख्या सांख्यकारिकाव्याख्या समाप्ता ॥

श्री सद्गुरुदेवतार्पणमस्तु ।

ॐ तत्सत्

६२ कारिकानन्तरं केषुचित्पुस्तकेषु एषा कारिका कैश्चित्पण्डितैः गौडपादीयभाष्यमनुसृत्य निर्णीयते ।

**कारण मीश्वरमेके ब्रुवते कालं परे स्वभावं वा ।**
**प्रजाः कथं निर्गुणतो व्यक्तः कालः स्वभावश्च ॥**

इयं कारिका निरीश्वरतां प्रतिपादयति । तस्मादेव आस्तिक-पाठेषु इयं च्याविता स्यात् । अधुनातनेष्वपि एनां कारिकां प्रति विप्रतिपत्तयः सन्ति । दाक्षिणात्यपाठेषु एषा न दृश्यते । वाचस्पतिमिश्रा अपि न व्याकुर्वन् । अत्र व्याख्यातारोऽपि तथैव ।



